# विजयागमः

स्वस्ति

श्रीगणाधिपतये नमः

अथ वक्ष्ये समासेन दुर्गाया उत्सवं परम्
भुक्तिदं मुक्तिदं चैव राज्ञां विजयवर्धनम् १
सर्वपापक्षयकरं सर्वपुण्यफलप्रदम्
सर्वदेवहितं चैव सर्वलोकसुखप्रदम् २
ग्रामराष्ट्रपुराधीनां सर्वसम्पद्विवर्धनम्
उत्तमद्विविभेदेन उत्सवं त्रिविधं भवेत् ३
उत्तमं तु नवाहं स्यात् सप्ताहं मध्यमं भवेत्
पञ्चाहमधमं ज्ञेयमित्येवं त्रिविधं भवेत् ४
नवाहं दैविकं ज्ञेयं देवताप्रीतिकारकम्
सप्ताहमुत्सवं ज्ञेयं भौवनं जन्तुपालनम् ५
पञ्चाहमुत्सवं ज्ञेयं भौतिकं भूतरक्षकम्
अत्रैव वक्ष्यते सम्यक् ध्वजारोहणपूर्वकम् ६
तीर्थान्तमुत्सवविधिर्दैविकः क्रमयोगतः
प्रथमं सिंहयोगं तु द्वितीयं केतुरोहणम्
भेरीघोष तृतीयं स्याच्चतुर्थं चाङ्कुरार्पणम् ७
पञ्चमं यागशालं च षष्ठं च बलिदानकम्
सप्तमं कौतुकारम्भमष्टमं यागकर्म च ८
नवमं चोत्सवं प्रोक्तं दशमं परिवेषकम्
एकादशं रथारोहं चूर्णोत्सवमतः परम् ९

References:
Pages 1-73: *Vijayāgama*—Manuscript No. T0625 of the Muktabodha on-line digital library, displaying the paper transcripts of the French Institute of Pondicherry.
Pages 74-102: *Vijayāgama* —Manuscript No. T0124 of the Muktabodha on-line digital library.
Pages 102-151: *Vijayāgama*—Excerpts from Manuscript No. T0063.
Pages 152-154: *Vijayāgama*—Excerpts from Manuscript No. T0065.
Pages 154-175: *Vijayāgama*—Excerpts from Manuscript No. T0320.
Pages 175-182: *Vijayāgama*—Excerpts from Manuscript No. T0829.
Pages 182-187: *Vijayāgama*—Excerpts from Manuscript No. T0662.
Pages 187-189: *Vijayāgama*—Excerpts from Manuscript No. T0223.

तीर्थस्नानं ततः कुर्यात् पूर्णाहुतिदनन्तरम्
ध्वजावरोहणं पश्चात् शुद्धस्नानं तु षोडश १०
उक्तानि षोडशैतानि कर्माणि च समाचरेत्
मार्गशीर्षे तथार्द्रायां मासे त्वार्द्रान्तमुच्यते । मुत्सवम् ११
पुष्यमासे तु पुष्यान्तं मघान्तं माघमासिके
फल्गुने चोत्तरान्तं स्याच्चित्रान्तं चैत्रमासके १२
वैशाखे तु विशाखान्तं अनुराधे तु ज्येष्ठके
मूलान्तकं भवेत् १३
आषाढे चोत्तराषाढं श्रावणे श्रवणान्तकम्
पूर्वाभद्रे तथा मासे पूर्वाभद्रान्तमुच्यते १४
अश्वान्तमश्वयङ्मासे कार्तिके कृत्तिकान्तिकम्
क्रमेणैवं समुक्तानि मासर्क्षाण्युत्सवाय च १५
अमावास्यादि षष्ट्यान्तमष्टम्यान्तमथापि वा
अन्यत्पुण्यदिनान्तं वा राज्ञां जन्मदिनान्तिकम् १६
कर्तृजन्मलयान्तं वा प्रतिष्ठान्ते विशेषतः
उत्सवं तु प्रकर्तव्य दिनापेक्षा न विद्यते १७
दारुसंग्रहणं कृत्वा पूर्वमेव यथाविधि
चन्दनं खदिरं चैव कर्मकं वैणवं तथा १८
मधूकं देवदारुं च सालं च बकुलं तथा
वक्रं च सुषिरं चैव क्रिमिकोटरदूषितम् १९
वर्जयेत्तरुमेवं तु संग्रहेल्लक्षणान्वितम्
उत्सवस्य समारम्भे प्रकारान्तर्बहिस्तथा २०
ग्रामवीथिश्च परितो मार्जनाप्रथमं ततः
गोमयोदकणै पश्चात् अरणीयं विलेपनम् २१
सुगन्धपुष्पमाल्यैश्च वितानैस्तोरणादिकैः
भूषयेत्परितो दिक्षु नानाविभवविस्तरैः २२

देशिकस्तु यथान्यायं कृत्वा स्नानादिकक्रियाम्
देव्यालयं प्रविश्याथ प्राङ्मुखो वाप्युदङ्मुखः २३
आश्रयेदासनं मन्त्री पद्मं वा स्वस्तिकं तु वा
स्वगुरूदितमार्गेण गुर्वादीनभिवन्दयेत् २४
प्राणायामं भूतशुद्धिं व्यासजातं विधाय च
ततो गन्धादिभिर्देवीं संपूज्य च यथाविधि २५
समर्च्य चोपहारांश्च नत्वा स्तुत्वा तु चण्डिकाम्
रचितां बलिहस्तस्स निदं श्लोकमुदीरयेत् २६
देवि दुर्गे जगन्नाथे शरणागतवत्सले
आद्योत्सवक्रियारम्भं कर्तुमिष्ये भवाज्ञया २७
तदैव सुप्रसन्नास्यामनुज्ञां ददतीं स्मरेत्
ततो मण्टपमासाद्य देवी मनसि संस्मरेत् २८
प्रागाननोपविष्टस्सन्नासने तत्र देशिकः
सर्वविघ्नविनाशार्थं सुगन्धकुसुमाक्षतैः २९
गणनाथं समभ्यर्च्य घण्टारवपुरस्सरम्
प्रदत्वा धूपदीपौ च निवेद्यं च निवेदयेत् ३०
दद्यात् पुष्पाञ्जलिं तस्मै नत्वा संप्रार्थयेच्च तम्
भेरीमद्दलशङ्खादि नानावाद्यस्वनैरपि ३१
सन्तोषयेच्च मतिमान्नीहराङ्गणनायकम्
वेदवेदाङ्गसम्पन्नैर्ब्राह्मणै सह देशिकः ३२
नान्दीकर्म विधायाथ पुण्याहं वाचयेत्ततः
प्रागग्रानुदगग्रान्वा कुशानास्तीर्य भूतले ३३
अधोमुखानि पात्राणि सकुशान्यत्र सादयेत्
वस्त्रादिकानि विन्यस्य संस्कृतैः प्रोक्षणीजलैः ३४
तानि चास्त्रेण संप्रोक्षेदुन्मुखानि प्रविन्यसेत्
तेषु पात्रेषु कूर्चानि विन्यस्य प्रणवेन च ३५

पाद्यमाचमनं चार्घ्यं मधुपर्कं च योजयेत्
मूलमन्त्रेण चाङ्गैर्वा स्पृष्ट्वा चैवाभिमन्त्रयेत् ३६
यजमानोऽथ मूलेन पाद्यमाचमनं तथा
अर्घ्यं च मधुपर्कं च वस्त्रयुग्माङ्गुलीयकम् ३७
कुण्डले यज्ञसूत्रं च भूषाश्च विविधा अपि
आचार्याय प्रदत्त्वैव मूर्तिपेभ्यः स्वमन्त्रकैः ३८
दद्याद्गन्धादिभिस्सर्वानाराध्यार्घ्यं निवेद्य च
गुरूमूर्तिधरेभ्यश्च दद्याद्भक्त्या च दक्षिणाम् ३९
संबन्ध्य यजमानोऽसौ पाणावलम्ब्य पाणिना
मया संपूजितैरत्र दक्षिणाभिश्च तोलितैः ४०
क्रियतामम्बिकायागं प्रार्थयामि प्रसीदत
आचार्यप्रमुखा ब्रूयुः मूर्तिपाश्चोन्तथेति च ४१
क्षमाग्नि यजमानार्कवारीरणनिशाकराः
व्योमान्ता मूर्तयश्चाष्टौ प्रमादेवं प्रकीर्तिताः ४२
धारिका दीप्तिमत्युग्राज्योत्स्ना श्वेता बलोत्कटा
धात्री बैल्वीति विज्ञेया मूर्तिपाश्च यथाक्रमम् ४३
मन्त्रैर्णिजणिजैस्तत्र मूर्तिपांस्तान् प्रसाद्य च
आचार्यवचनेनान्यान् कर्माह्वां परयेद्द्विजान् ४४
वृतौ सौ यजमानेन गुरुमूर्तिधरादिकैः
क्रमेण सिंहयागादि कर्माग्नि च समाचरेत् ४५
प्रथमं सिंह्वमालिख्य द्वितीयं नेत्रमोचनम्
तृतीयं चाम्बुशयनं प्रोक्षणं तु चतुर्थकम् ४६
पञ्चमं शयनारम्भं षष्ठं कुम्भाधिवासनम्
सप्तमं तु कलान्यासमष्टमं होमकर्म च ४७
नवमं स्यात्प्रीतिसरं दण्डसंस्थापनं परम्
ततस्त्वान्यशिरोन्यासं नामावृत्ति ततः परम् ४८

पूर्णाहुति ततश्चैव पुरायाहं तु चतुर्दशम्
ध्वजारोहं पञ्चदशं षोडशं स्याद्ध्वजार्चनम्  ४९
एवं षोडशकर्माणि बिम्बे यागे समाचरेत्
ध्वजाङ्कुरार्पणं कुर्याद्ध्वजारोहणपूर्वतः  ५०
अथवा विधिवन्मन्त्री कुर्यात्सद्योऽङ्कुरार्पणम्
सिंहाग्रे स्थरिडलं कुर्याच्छालिभिस्तराडुलैस्तिलैः  ५१
दर्भकूर्चं प्रविन्यस्य प्रणवेनार्चयेत्ततः
नवहस्तयुतायामं भूतनागैकविस्तरम्  ५२
सम्पाद्यैवं ध्वजपटं पटं कार्पाससंभवम्
वर्णानि सङ्ग्रहेत्पश्चात्पृथक् पात्रे विचक्षणः  ५३
शाङ्खमञ्जनकं चैव गैरिकं जातिलिङ्गकम्
श्यामं चैतानि वर्णानि पञ्चालोप्य जलेन च  ५४
कृत्वा तु वर्णसंस्कारं हेमतूलिकया गुरुः
सुलग्ने लेपयेत्तत्र सिंह्वं कुशलशिल्पिना  ५५
सर्वावयवसंयुक्तं कमलासनसंस्थितम्
विस्तारसमलाङ्गूलं शुभदंष्टाङ्किताननम्  ५६
आरक्तकृष्णनयनं पीतनासिकयान्वितम्
शुभ्रैः क्रूरैर्नखैर्युक्तं रक्तजिह्वालकान्वितम्  ५७
रक्तकर्णद्वयोपेतं पीतकेसरशोभितम्
श्वेतपुच्छाङ्घ्रिसंयुक्तं सर्वाभरणशोभितम्  ५८
घराटाचामरसंयुक्तं छत्रसंवृतमस्तकम्
पूर्णकुम्भद्वयोपेतं वेत्रद्वयसमन्वितम्  ५९
एवं विलिख्य विधिना मनोज्ञालक्षणान्वितम्
श्वेतं रक्तं तथा पीतं कृष्णं चेति चतुर्विधम्  ६०
वर्णानां ब्राह्मणादीनां ध्वजवर्णं समीरितम्
दिक्पतिं पुरुहूताद्यैः वाहनायुधलाञ्छितान्  ६१

स्वस्वभूषणवर्णाढ्यान्विलिखेद्दिक्पटेष्वपि
तानप्यस्त्रेण संप्रोक्ष्य पञ्चगव्यैश्च संस्कृतैः ६२
हेमशूलिकया पश्चान्नेत्रोन्मीलनमाचरेत्
सूर्यसोममनू न्यस्य सिंहराजस्य नेत्रयोः ६३
यजमानो हिरण्याद्यैः स्तोषयेच्छिल्पिनं ततः
गन्धतोयैश्च संपूर्णं सौवर्णादिषु पात्रकम् ६४
देव्याश्च पुरतो विद्वान् स्थण्डिलोपरि विन्यसेत्
जलाशयं तु संकल्प्या वरुणं तत्र पूजयेत् ६५
दर्पणं विन्यसेन्मध्ये निर्मलं तत्र देशिकः
यामं यामार्धमात्रा वा ध्वजच्छायां निवेशयेत् ६६
ब्रह्मजज्ञानमन्त्रेण ततः पादेषु विन्यसेत्
इदं विष्णवति मन्त्रेण सिंहस्योदरमध्यतः ६७
त्रियम्बकेति मन्त्रेण विन्यसेत्पृष्ठदेशताः
आपोहिष्ठेति मन्त्रेण लाङ्गूलाग्रे च विन्यसेत् ६८
विश्वतश्चक्षुरित्यन्तमनुना विन्यसेद्दृशोः
तोरणविन्यसेन्मूर्ध्नि ततस्तत्वानि विन्यसेत् ६९
स्थण्डिलं च ततः कृत्वा पद्ममालिख्य मण्टपे
आसनं कल्पयित्वात्र सिंहं तत्रैव शाययेत् ७०
ततः पूर्वमुखासीनः स्वयं तत्र सुखासने
कुर्यात्करङ्गविन्यासं प्राणायामपुरस्सरम् ७१
ततः कृत्वा नवपदं तेषु शाल्यादिका न्यसेत्
यष्ट्वा पीठं च सिद्धिवत् कलशान् नव विन्यसेत् ७२
स्वर्णकूर्चानि विन्यस्य पूरयित्वा शुभोदकैः
फलपल्लवकूर्चानि सवस्त्राणि प्रविन्यसेत् ७३
मूलेनैव समावाह्य सिंहं मध्यघटे गुरुः
ततस्तं सिंहगायत्र्या गन्धाद्यैश्च समर्चयेत् ७४

आदौ तारं समुच्चार्य वज्रशब्दं तथैव च
नखदंष्ट्रायुधानान्ते महासिंहाय संवदेत् ७५
हुंफडन्ते द्विष्ठमिति मूलमन्त्रं समीरितम्
प्रत्येकं त्रिस्त्रिवर्णैश्च विभक्तेनाणुमामुना ७६
षडङ्गानि विधेयानि जातियुक्तानि मन्त्रिणा
ॐन्तं वज्रनखं पश्चाद्विद्महे पदमुच्चरेत् ७७
तदन्ते तीक्ष्णदंष्ट्राय तन्नः सिंहः प्रचोदयात्
एवं सिंहस्य गायत्रीमन्त्रमेतमुदीरितम् ७८
तत्वतत्वश्वरन्यस्ये मुखमध्यपदेषु
आत्मविद्याशिवानां च पृथकद्योतयाः क्रमात् ७९
नारसिंहपदं प्रोक्त्वा तत्वायनतिमुच्चरेत्
पुनस्तथैव तारादि तत्वान्तं समुदीरयेत् ८०
पश्चादधिपतिपदं चतुर्थ्यन्तमुदीर्य च
ॐनमोऽन्तयुता पश्चाद्ब्रह्माविष्णुशिवां पदेत् ८१
तत्वतत्वेश्वरा जंवं सिंहस्य समुदीरिताः
पञ्चास्यं च मृगाधीशं दंष्ट्रिणं गजमर्दनम् ८२
पिङ्गलाक्षं वज्रनखं तेजिष्ठं च महाबलम्
सिंहविद्येश्वराह्येतान् पूर्वादिक्षु समर्चयेत् ८३
दिशीशानर्चयेत्पश्चात् स्वस्वस्थाने द्विजोत्तमः
पूर्वे वा चोत्तरे वापि स्थण्डिलं कारयेद्बुधः ८४
ततोऽग्निं जनयेत्तस्मिन्नग्निकार्योक्तवर्त्मनि
सिंहमग्नौ समावाह्य गन्धाद्यैः साङ्गमर्चयेत् ८५
तारादिव्याहृतीभिश्च पूर्वं हुत्वा घृताहुतिः
समिद्धृतहवींषी च तिलसर्षपकान् यवान् ८६
शतमर्धं तदर्धं वा सिंहगायत्रिमन्त्रतः
हुत्वा तथैव जुहुयात् तत्त्वतत्त्वेश्वरैः क्रमात् ८७

सिंहाङ्गमनुना चैव जयाद्यैश्च हुनेत्ततः
दत्वा पूर्णाहुतिं पश्चात् परिषिच्य विसर्जयेत् ८८
सघृतं च हविर्दद्यात् सिंहायामिततेजसे
दण्डसंस्थापयेत्पश्चात् सुदृढं देशिकोत्तमः ८९
शङ्खदुन्दुभिनिर्घोषैः ब्रह्मघोषैः समाकुलम्
न्यासे ध्वजपदं याने दिक्पटैश्च समन्वितम् ९०
शस्त्रराजसमायुक्तं देवीमूर्त्या च संयुतम्
हर्म्यप्रदक्षिणवशात्कृत्वा ग्रामप्रदक्षिणम् ९१
ध्वजदण्डान्तिकं गत्वा सर्वमङ्गलसंयुतम्
ततस्ताद्वेदिकायां तु पुण्याहं वाचयेद्गुरुः ९२
ततस्त्वङ्कुरपात्राणि स्थापयित्वा समन्ततः
संवेष्ट्य दर्भदाम्ना च ध्वजयष्टिं विचक्षणः ९३
स्वर्णाभरणमाल्याद्यैर्नववस्त्रैर्विभूषयेत्
शतदर्भयुतं कूर्चं व्यष्ट्याग्रे च प्रविन्यसेत् ९४
शिवादितत्त्वत्रितया मध्यमूलादि भावयेत्
भावयेन्मनसा मन्त्री वेदिकायां तथैव च ९५
आधारशक्ति चानन्तं कूर्चे च तदनन्तरम्
आग्नेयादिषु कोणेषु धर्मादीन् परिभावयेत् ९६
पूर्वादिषु चतुर्दिक्षु तथैवाधर्मपूर्वका
प्रभाद्या शक्तयश्चाष्टौ पूर्वाद्यब्जदलेषु च ९७
भावयेत्कर्णिकामध्य सर्वसिद्धिप्रदां गुरुः
दण्डे तु परमं पुंसं रज्जौ शक्तिं च भावयेत् ९८
सूर्यसोमनलांश्चैव स्मरेत्कुण्डत्रये शु च
बध्वा सिंहपटं रज्वा सिंहगायत्रिमन्त्रतः ९९
क्षुद्रघण्टां समायोज्य शस्त्रमन्त्रमनुस्मरन्
कम्भतो बीजमुद्धृत्य संस्मरन् मूलमन्त्रतः १००

आवाह्य मुद्रया सिंहे पूजयेत्कुसुमादिभिः
सुमुहूर्ते सु संप्राप्ते दैवज्ञेनान्वितो गुरुः १०१
वेदमङ्गलवाद्यैश्च सर्ववाद्यैस्समं गुरुः
आहूयारोहणायास्य प्रेरयित्वा जनान् तदा १०२
अप्रमादेन हस्ताभ्यां समुद्धृत्य ध्वजं ततः
सिंहमारोपयेच्छीघ्रं तन्मूलमनुमुच्चरेत् १०३
दण्डमूलं समभ्युक्षे ततः सिंहघटोदकैः
सिंहविद्येशकुम्भस्थैस्तोयैः पूर्वादिदिक्षु च १०४
तत्तन्मन्त्रेद्द्लानष्टौ क्रमेण प्रोक्षयेद्गुरुः
पूजयित्वा यथान्यायं दद्यान्नैवेद्यमुत्तमम् १०५
ततस्सर्वजनेभ्यश्च दद्यात्ताम्बूलमादरात्
एवं ध्वजावरोहान्तं दिनं प्रति दिनं प्रति १०६
द्विकालं वा त्रिकालं वा सिंहमभ्यर्चयेद्गुरुः
निवेद्य मधुरान्नं च वाद्यघोषांश्च कारयेत् १०७
इति विजयागमे ध्वजारोहणविधिः

अतः परं प्रवक्ष्यामि भेरीसन्ताडनं विधिः
स च रात्रौ प्रकर्तव्यः सर्वदेवप्रियावहः १
स्थण्डिलं स्थापनं पूर्वमस्त्रभ्यासं द्वितीयकम्
भेरीन्यासं तृतीयं स्यादन्नलिङ्गं चतुर्थकम् २
पुण्याहं पञ्चमं प्रोक्तं षष्ठं स्याद्देवतार्चनम्
सप्तमं चोपहारं स्याद्भेरीताडनमष्टमम् ३
नवमं तालभेदं स्याद्दशमं वाद्यघोषणम्
तत्परं देवताह्वानद्वादशं स्वस्तिवाचनम् ४
ततो मङ्गलवादं स्यात्त्रयोदशमतः परम्
बलिदानं पञ्चदशं ततो ग्रामप्रदक्षिणम् ५

एवं पञ्चदशोक्तानि भेरीसन्ताडने विधौ
तानि कर्माणि तनुयात्क्रमशो देशिकोत्तमः ६
आचार्यस्तु शुचिर्भूत्वा सान्ध्यं कर्म विधाय च
संपूज्य विधिवत् साङ्गं दुर्गां दुर्गतिहारिणी ७
देव्याश्च सन्निधौ कुर्यात् स्थण्डिलद्वितयं ततः
तत्र चक्रं प्रविन्यस्य सर्वदेवात्मकं गुरुः ८
भेरी तत्पुरतो मन्त्री स्थण्डिले च प्रविन्यसेत्
ततः स्वर्णादिसंभूते पार्श्वे देशिकसत्तमः ९
साज्येन हविषा कृत्वा लिङ्गं मूलाणुना दृढम्
तत्पुरस्तात्र तारेण विन्यसे स्थण्डिलोपरि १०
पुण्याहं वाचयेत्पश्चादृत्विग्भिः सह देशिकः
अस्त्रमन्त्रेण चक्रे च भेरीलिङ्गं समुक्षयेत् ११
अस्त्रराजपदं प्रोक्तन्देन्तमसनशब्दकम्
ताराद्यं हुंफडन्तस्यादेतद्दासनमन्त्रकम् १२
प्रदद्यादासनं तस्मै मनुनानेन देशिकः
प्रोक्था तारभ्यास्त्रराजं न्देन्तमूर्तिपदं ततः १३
हुंफट् पदं समुच्चार्य मूर्तिमन्त्रमिदं स्मृतम्
अनेन मनुना चैतदस्त्रराजात्मकं स्मरेत् १४
अस्त्रराजग्रमध्ये तु दक्षिणे च तथोत्तरे
दुर्गासरस्वतीं लक्ष्मीमीशब्रह्महरीन् ततः १५
क्रमादावाह्य संपूज्य तत्र तत्र विचक्षणः
तत्समन्तात्प्रभाद्याश्च मात्रश्चैव समर्चयेत् १६
तन्मध्यकालिकाद्याश्च सूर्येन्दू तस्य पार्श्वयोः
आदित्याश्च वसून् रुद्रां तत्समन्तात् समर्चयेत् १७
मुण्डिनीमध्यमूले तु यजेत्तत्पार्श्वयोर्द्वयोः
गणेशं षण्मुखं चैव परितश्च दिगीश्वरान् १८

भेरीं संवेष्टयेत् पश्चात् न्वाससा नूतनेन च
प्रणवेनासनं दत्वा ध्यात्वानां प्रणवात्मिकाम्  १९
प्रणवं भुवनाधीशं प्रसादं च ततो वदेत्
शब्दान्ते ॐनमोऽन्तं च तत्त्वशब्दं समुच्चरेत्  २०
इत्युक्तः शब्दतत्त्वाणुस्तेनावाहा समर्चयेत्
तन्मध्ये पूजयेद्देवीं दक्षवामस्ययोस्ततः  २१
सरस्वतीं यजेल्लक्ष्मीमीशादिं तत्र तत्र तु
भास्करं च निशाधीशं यजेत्तद्वलयद्वये  २२
तथैव सप्तकीलेषु सप्तमातृश्च पूजयेत्
नवग्रहान् यजेन्मन्त्री नवकीलेषु च क्रमात्  २३
वासुकिं चर्मसूत्रेषु सुषिरेष्वनिलं यजेत्
तत्प्रहारे यजेत् स्कन्दं तच्छब्दे ब्रह्मशाश्वतम्  २४
ततस्तत्रान्नलिङ्गे तु देवीमावाह्य पूजयेत्
एवं गनवादिभिः पूज्य स्वस्वनाम्ना पृथक् पृथक्  २५
प्रदत्वा धूपदीपौ च नैवेद्यमथ दापयेत्
ततो वादनदण्डं च प्रोक्षयेदस्त्रमन्त्रतः  २६
शिवशक्त्या परं रूपं ध्यात्वात्त निश्चलेन्द्रियः
ततस्तयोश्च संपर्कसंभूताश्छब्दतत्त्वतः  २७
जयमानमिवं ध्यात्वा परमानन्दमादरात्
भेर्यात्सन्ताडनं कुर्यात्तेन दण्डेन देशिकः  २८
प्रणवं चास्त्रमन्त्रं च मनसा संस्मरन् गुरुः
एकः प्रहारतः पूर्वं द्वितीयं द्विप्रहारतः  २९
तृतीयं त्रिप्रहारेण त्रयमेकप्रहारतः
एवं संताड्य विधिना ह्रस्वादि क्रमभेदतः  ३०
ततो वादक्रमाहूय वाग्मिनं सुकुलोद्भवम्
यवानं सर्वतालज्ञं प्रोक्षयेदस्त्रमन्त्रतः  ३१

गन्धमाल्याक्षतान् वस्त्रं ससूत्रं चोत्तरीयकम्
दत्वास्मै तत्करे पश्चा पुष्पं चैवास्त्रमन्त्रतः ३२
सोऽपि तत्कुसुमं भेर्यां विन्यसेद्देशिकाज्ञया
स्कन्धे विन्यस्य तद्भेरीं गान्धारादि स्वरान्विताम् ३३
तालान् ब्रह्मादिदेवानां वादयेच्च यथाक्रमम्
ततश्च कारयेन्मन्त्री प्रथमं पटहध्वजम् ३४
द्वितीयं मद्दलारावं शङ्खवद्यं तृतीयकम्
तालवाद्यं चतुर्थं तु पञ्चमं तूर्ध्वकाध्वनिम् ३५
षष्ठं त्वक्सारवाद्यं स्याद्वीणावाद्यं तु सप्तमम्
काहली चाष्टमं वाद्यं नवमं कहलध्वनिम् ३६
दशमं तु मृदङ्गाख्यं शृङ्गवाद्यं तथोत्तरम्
नानागानरवैः पश्चान्मञ्जुलांश्च मृदावहन् ३७
सकृदेव ततः कुर्यात् सर्ववाद्यध्वनीन् बहू
ततस्तिष्ठन् समादाय स्वयं पुष्पाणि देशिकः ३८
क्रमेण त्रिदशादीनां श्लोकैराह्वानमारभेत्
इन्द्रः सुरगणाधीशः श्यामलः कुलिशायुधः ३९
शच्यान्वितो गजारूढः सर्वाभरणभूषितः
उत्सवाय महादेव्या समागच्छतु पार्श्वगैः ४०
अग्निः शक्तिकराङ्गोजो मेषवाहस्त्रिलोचनः
स्वर्णालङ्कारसंयुक्तो रक्तस्वाहासमन्वितः ४१
उत्सवाय महादेव्याः समागच्छतु पार्श्वगैः
कालः कालपयोदाभो दण्डभृन्महिषस्तथा ४२
भूषितश्चारुभूषाभिर्निजशक्तिसमन्वितः
उत्सवाय महादेव्याः समागच्छतु पार्श्वगैः ४३
निर्ऋतिर्मानुषारूढः शोणनेत्रकृपाणधृक्
दंष्ट्राकरालवदनो भूषणाढ्यः सशक्तितः ४४

उत्सवाय
वारुणः शरदाभाभः पाशभृद्विनितान्वितः
सरत्नमालहाराभिः शोभिते मकराश्रितः ४५
उत्सवाय
वायुर्मृगवरारूढो विविधाभरणोज्वलः
साङ्कुशः सहितः शक्त्या धूमधूम्रनिभ प्रभुः ४६
उत्सवाय
सोमस्तुरगमारूढः शुक्लवस्त्रो गदाधरः
दिव्य माल्याम्बराद्यैश्च शोभितो रोहिणीयुतः ४७
उत्सवाय
ईशानो वृषभारूढः शूलहस्तोऽहि भूषणः
शुद्धस्फटिकसंकाशो निजशक्तिसमन्वितः ४८
उत्सवाय
ब्रह्मा हंससमारूढः पद्महस्तः सुरार्चितः
तप्तचामीकरप्राख्यः सरस्वत्या समन्वितः ४९
उत्सवाय
अनन्तो वैनतेयस्थ चक्रहस्तः सितप्रदः
मकुटाद्यैरलङ्कारैः शोभितः कमलान्वितः ५०
उत्सवाय महादेव्याः समागच्छतु पार्श्वगैः
अन्ये च विबुधाः सर्वे स्वर्गलोकनिवासिनः ५१
सगणाः सपरिवाराः सालङ्काराः सवाहनाः
उत्सवाय महादेव्याः समागच्छतु सायुधा ५२
यक्षाश्च राक्षसाश्चैव गन्धर्वा किन्नरास्तथा
सिद्धाश्च गुह्यकाश्चैव ये चान्येऽप्सरसां गणाः ५३
उत्सवाय महादेव्याः समागच्छन्तु ते मुदा
समुद्राः पर्वताश्चैव लङ्का द्वीपा नदी नदाः ५४

सशिष्याश्चैव योगीन्द्रः व्यासाद्या मुनयश्च ये
उत्सवाय महादेव्याः समागच्छन्तु ते मुदा ५५
ब्रह्मलोकनिवासाश्च विष्णुलोकनिवासिनः
शिवलोकनिवासाश्च ये चान्ये चास्य कर्मिणः ५६
उत्सवाय महादेव्याः समागच्छतु ते मुदा
स्वर्गे च मानुषे लोके नागलोके तथैव च ५७
वसन्ति प्राणिनो ये च पूर्णस्थिरचरात्मकाः
उत्सवाय महादेव्याः समागच्छन्तु ते मुदा ५८
एवमाहूय सकलान् दिक्पालप्रमुखान् क्रमात्
तदाह्वानावसाने तु तत्तदागमनं पृथक् ५९
संस्मरणं न लिङ्गेऽत्र प्रकुर्यात् कुसुमाञ्जलिम्
स्वस्तिवाचनकं कुर्यात् ततो मङ्गल्यवादनम् ६०
बुकुर्मङ्गल्यवाद्यान्ते तथा स्तूत्यथ भूसुराः
अथ विप्रं समाहूय दीक्षितं निर्मलाङ्गकम् ६१
वेदज्ञं सुकुलोद्भूतं सिंहरूपमिमं स्मरन्
अन्नलिङ्गं च तन्मूर्ध्नि विन्यसे सास्त्रराजकम् ६२
शङ्खदुन्दुभिवीणाद्यैः नानावाद्यरवैस्तथा
नृत्यैर्गीतैश्च तालैश्च नाट्यैश्च गणिकाजनैः ६३
ध्वजच्छत्रपताकाभिः वाहनैर्विविधैरपि
वेदमङ्गलनिर्घोषैः स्तोत्रपाठैस्तथैव च ६४
एवमाद्यैश्च विभवैस्सार्धं नृपवरोचितैः
द्वारादिदेवताभ्याश्च पार्श्वदेभ्यस्ततः परः ६५
गन्धपुष्पादिद्रव्यैः जातवेद यथाविधि
प्रकृत्वा बलिदानं च तत्तन्मन्त्रैश्च देशिकः ६६
ध्वजस्थानं समासाद्य तत्तद्देवेभ्यो बलिं हरेत्
तत्तग्राममासाद्य ब्रह्मादीशावसानकम् ६७

सर्वभूतगणानां तु बलिं दत्वा विशेषतः
गर्भालयं समासाद्य देव्याश्च पुरतो गुरुः ६८
मूर्धि बद्धाञ्जलिर्भूत्वा क्षमस्वेति ततो वदेत् ६९
इति श्रीविजयागमे भेरीताडनविधिर्द्वात्रिंशोऽध्यायः

अथाङ्कुरार्पणं वक्ष्ये प्रशस्तं सर्वकर्मसु
तेन संवर्धते लक्ष्मीः कल्याणं च सुखं यशः १
उत्सवस्य दिनात्पूर्वं नवमे सप्तमेऽथवा
पञ्चाहे वाथ कर्तव्यं त्रिदिने वाङ्कुरार्पणम् २
मृत्तिकाहरणं पूर्वं पुण्याहं तु द्वितीयकम्
सूत्रपात्रं तृतीयं स्यात् चतुर्थं सोमपूजनम् ३
पञ्चमं पालिकादीनां स्थापनं परिकीर्तितम्
अङ्कुरारोपणं षष्ठं सप्तमं तु समुक्षणम् ४
ततो वस्त्रपिधानं च नवमं देवतार्चनम्
दशमं तु निवेद्यं स्यात् बलिदानं तथोत्तरम् ५
इत्येकादशकर्माणि विधेयान्यङ्कुरार्पणे
स्वर्णैश्च रजतैर्वापि ताम्रैर्वा मृत्तिरेव वा ६
मात्राङ्गुलप्रमाणेन कर्तव्याः पाशकादयः
पालिका नवविस्तारं कुर्वीतमनुमात्रकैः ७
विस्तारेण समोत्सेधं तदर्धं पादविस्तरम्
विस्तारसमभागैकं परितश्चोष्ठमाचरेत् ८
विस्तारस्य त्रिभागैकं वर्तितं बिलमुच्यते
विस्ताररसभागैकं दण्डविस्तारमापरेत् ९
पालिकालक्षणं चैव घटिकाया निगद्यते
घटिका कलशाकारा पञ्चवक्त्रसमन्विता १०
पूर्ववद्दण्डपादेस्तं कुम्भविस्तारमङ्गुलैः

विदध्यादष्टभिः प्रोक्तो घटिकालक्षणं ततः ११
पालिकार्धप्रमाणेन शरावं कारयेत्ततः
यथासंभवमानं वा पालिकाद्यास्समाहरेत् १२
कारयेत् सोमकुम्भं तु शोभनं शिवकुम्भवत्
कृष्णश्छिन्नं च सुषिरं भेदं छेदं सलिङ्गकम् १३
वर्जयेत्तु प्रयत्नेन सादयेल्लक्षणान्वितम्
संग्राह्या पालिकाद्योश्च प्रत्यकं तु चतुश्चतुः १४
पात्राणां पालिकादीनां दर्भैराच्छादयेद्बलिम्
ततस्तु मुण्डिनीं पूज्य सर्वालङ्कारसंयुताम् १५
याने तां च समारोप्य मृत्तिकाहरणाय वैः
ध्वजच्छत्रपताकाद्यैः गीतनृत्तादिवाद्यकैः १६
नद्यास्तीरं तटाकास्य पुष्पारण्यमथापि वा
गत्वा शुद्धभुवा भागं दर्भं संस्पृश्य चास्त्रतः १७
अभ्युक्ष्य चास्त्रतोयेन मूलमन्त्रमनुस्मरन्
हृदा भूमिं समावाह्य गन्धपुष्पैस्समर्चयेत् १८
दिगीशांश्च ततोऽभ्यर्च्य कुद्दलीमस्त्रमन्त्रतः
नैवेद्यं दापयित्वा तु भूमिं खात्वा तयास्त्रतः १९
हृदा मृदं च संगृह्य कांस्यपात्रे तु पूरयेत्
तेनैव मृदमभ्यर्च्य वस्त्रेणाच्छादयेत्ततः २०
परिचारकमाहूय सोष्णीषं सोत्तरीयकम्
गन्धमाल्यैरलङ्कृत्य तत्पात्रं शिरसि न्यसेत् २१
वेदमङ्गलनिघोषैः शङ्खवाद्यादिकैस्सह
पूर्वे वा पश्चिमे वापि प्रासादस्य तथोत्तरे २२
शोभितं तोरणाद्यैश्च परितस्य सुसंवृतम्
आनयेन्मण्टपं पश्चास्सप्तहस्तैर्विनिर्मितम् २३
पुण्याहवाचनं कृत्वा सूत्रपातमथाचरेत्

एतत्कर्म दिवाकाले कुर्याद्रात्रौ न बुद्धिमान्  २४
सूत्रं शिवेन संपूज्य शक्त्या तण्डुलपिष्टकम्
तेन पिष्टाकसूत्रेण मण्डलं रचयेद्बुधः  २५
पूर्वं  पूर्वगताग्राणि दश सूत्राणि देशिकः
तथैव चोत्तराग्राणि सदीर्घाण्यत्र पातयेत्  २६
रन्ध्रकोष्ठं त्यजेन्मध्ये वीथ्यर्थं  परितस्ततः
त्यजे षोडश कोष्ठानि दिक्षु कोष्ठद्वयं द्वयम्  २७
ततः संलक्ष्यते तत्र चतुष्कोष्ठे त्रयं पृथक्
तन्मध्ये पद्ममालिख्य रजोभिश्चत्रवर्णकैः  २८
रञ्जयित्वाथ तद्वीथिं श्यामपूर्णेन पूरयेत्
ततो वह्न्यादि शर्वान्तं तत्र तत्र चतुष्पदम्  २९
क्रमेण रञ्जयेन्मन्त्री पीतरक्तसितासितैः
शालिभिर्द्रोणसंयुक्तैः तण्डुलैश्च तदर्धकैः  ३०
संपूज्य पद्ममध्येऽत्र दर्भकूर्चानि विन्यसेत्
परितस्तेषु कोष्ठेषु द्विप्रस्थै शालितण्डुलैः  ३१
प्रत्येकं च समापूर्य दर्भकूर्चानि विन्यसेत्
सोमपीठं च संपूज्य तन्मध्ये देशिकोत्तमः  ३२
ससूत्रं सापिधानं च सकूर्चं  च सवस्त्रकम्
सोमकुम्भं न्यसेत्तत्र द्रोणार्धोदकपूरितम्  ३३
शतमान सुवर्णेन तदर्धेन तदर्धतः
तन्न्यूनं न च कुर्वीत वित्तशाठ्यं न कारयेत्  ३४
वृत्तां च प्रतिमां कृत्वा लिखित्वा चन्द्रमण्डलम्
कृत्तिकायास्त्रिकोणं च रोहिण्यां तु षडश्रकम्  ३५
कृत्वा चन्द्रं मूलमन्त्रा कृत्तिकारोहिणी युतम्
पूज्य मूलेन कुम्भस्य मध्यं ध्यात्वा विनिक्षिपेत्  ३६
गुरुः सोमं श्वेतवर्णमत्रिनेत्रसमुद्भवम्

श्वेतपद्मासनारूढं द्विनेत्रं कमलाग्रजम् ३७
द्विभुजं कुमुदोपेतं श्वेतवस्त्रेण वेष्टितम्
मुक्ताहारसमायुक्तकेयूरमकुटान्वितम् ३८
कृत्तिकादक्षिणे भागे रोहिणीं वामपार्श्वके
दुकूलवसनोपेते सर्वाभरणभूषिते ३९
एवं ध्यात्वा विधानेन पूजां कृत्वा द्विजोत्तमः
ततस्तु पालिकादीनि पात्राण्यप्यस्त्रमन्त्रतः ४०
प्रक्षाल्य तन्तुभिर्वेष्ट्य शमीदूर्वाङ्कुराण्यपि
बध्वाथ पात्रदण्डेषु सुधूपैश्च प्रधूपयेत् ४१
उत्कूर्चानि प्रविन्यस्य पूरयेन्मृत्तिकादिभिः
पात्रेषु पञ्चमांशेषु द्व्यंशं मृद्भिश्च पूरयेत् ४२
वालुकाभिस्तृतीयांशं चतुर्थं तु करीषकैः
अङ्कुराणां प्ररोहार्थं पञ्चमं त्ववशेषयेत् ४३
वह्नानि विन्यसेत्तानि पूजितेऽथ पदे पदे
पालिका घटिकाश्चाथ शरावांश्च चतुष्पदे ४४
तारेण विन्यसेन्मन्त्री क्रमेणैव चतुश्चतुः
सुमुहूर्ते तु संप्राप्ते ब्राह्मणानामनुज्ञया ४५
सुधाबीजजपन्मन्त्री प्राङ्मुखा पालिकादिषु
दिनेकंजलमग्नानि ग्रथितान्यथ वाससा ४६
बीजान्यर्चितदेवानि दुग्धदारास्पृतानि च
पञ्चवाद्यमहाघोषैर्निवपेद्धंसमुद्रया ४७
मुद्गव्रीहिकुलस्थाश्च राजमाषयवास्तिलाः
शिम्बाः प्रियङ्गवः श्यामामाषाढक्योऽथ सर्षपाः ४८
बीजान्येताप्यङ्कुराणां द्वादशोक्तान्यनुक्रमात्
विष्णवर्काग्नि जलेशोऽज यम वायु गुहेन्दवः ४९
शक्रपद्मेश्वराश्चैताः संप्रोक्ता बीजदेवताः

हारिद्राभि समभ्यक्ष शङ्खवाद्यरवैः पुनः ५०
सोमकुम्भस्तु तोयैश्च तन्मूलमनुमुच्चरन्
ततश्च नववस्त्रेण मृदुलेन सितेन च ५१
आच्छादयेदसंमर्द्दं जितन्त इति मन्त्रतः
अर्चयेद्विधिवत्पश्चात् पात्रबीजाधिदेवताः ५२
पालिकासु यजेद्विष्टं ब्रह्माणं घटिकाशु च
शरामेषु महेशानं गन्धपुष्पाक्षतैः क्रमात् ५३
उक्तबीजाधिदेवांश्च तत्र तत्र तथार्चयेत्
सोममभ्यर्चयेत्पश्चादोषधीनामधीश्वरा ५४
निवेद्यं दापयित्वेभ्यो भक्ष्यभोज्यादिसंयुतम्
परितोऽथ सकूर्चेषु मण्डलेष्वष्टसु क्रमात् ५५
रात्रिशेभ्यो बलिं दद्यात्स्वैस्वैर्द्रव्यैश्च सार्चनम्
भूताश्च परितो यक्षा नाग पद्मो भवेश्वराः ५६
बलिभुग्देवताश्चामूः क्रमा षड्भिर्दिनरात्रिषु
परत्र हरिरेव स्याद्बलिभुग्देवतास्तथा ५७
ताराद्यैर्नामभिश्चैषां स चतुर्थी नमोन्तिकैः
बलिमन्त्रस्वयं स्वस्व बलिद्रव्यमुदीर्यते ५८
लाजसक्तुर्निशाचूर्णतिलमुद्गधिमिश्रितम्
ओदनं भूतकराख्यं पैत्र्यं च तिलतण्डुलम् ५९
याक्षं तु लाजसंयुक्तं धानोडुम्बकमौरगम्
केरोदसक्तूपिष्टं स्याद्ब्राह्मं पद्मसिताक्षतम् ६०
शाम्भवञ्चोदनापूपमच्युतीयं गुलोदनम्
दुग्धोदनं च कृसरं पक्षे यदि नवाहके ६१
एवं प्रतिदिनं कुर्यात् त्रिकालभ्युक्षणार्चनम्
बलिं च रात्रिषु नरो न्यावदुत्सववासरम् ६२
तत्प्रभाते बलिं दत्वा सोममुद्वासयेत्ततः

परितो योजनीयास्ते तत्र देव्याश्च सन्निधौ ६३
अङ्कुरास्ते सुसंवृद्ध्या कोमला शुभ्रवर्णकाः
वृद्धिप्रदास्तु विज्ञेयो शुभास्यं समोर्ध्वगाः ६४
रक्ता कृष्णा स्वसंपूर्णा कुटिलाश्च तथाङ्कुराः
तिर्यग्गताश्च धूम्राङ्गा वर्ज्यास्युरशुभप्रदाः ६५
कृष्णवर्णेष्वङ्कुरेषु वित्तनाशो भवेत्तदा
कलहो रक्तवर्णेषु व्याधिस्तिर्यग्गतेषु च ६६
मृतिर्भवेदपूर्णेषु कुब्जेष्वरिभयं भवेत्
धूम्रवर्णेषु दुर्भिक्षं कुटिलेष्वयशो भवेत् ६७
एवं परीक्ष्य दोषांश्च मन्त्री तद्दोषशान्तये
मूलमन्त्रेण जुहुयात् सहस्रं वा तदर्धकम् ६८
अष्टोत्तरशतं वापि होमं कृत्वा यथाविधि
तावत्संख्यजपं कृत्वा साष्टोत्तरशतैर्घटैः ६९
स्नपनं कारयेद्विद्वान् शास्त्रदृष्टेन वर्त्मना
दक्षिणां गुरवे दद्यात् स्वशक्त्या यजमानकः ७०
ब्राह्मणान् तोषयेत्पश्चात् भोजनाद्यैर्विशेषतः
इति श्रीविजयागमे अङ्कुरारोपणविधिस्त्रयस्त्रिंशत्पटलः

यागशालां ततो वक्ष्ये लक्षणेन समन्विताः
प्रासादस्याग्रदिग्भागे शाङ्कर्यां दिशि चाथवा १
रचयेद्यागशालां च सुमुहूर्ते समागते
विस्तारायामयोः क्लृप्तिरस्या स्यात्तिथिहस्तकैः २
त्रयोदशकरैर्वापि दशहस्तैरथापि वा
स्वलादर्काङ्गुलोच्छ्रायः कुट्टिमोत्सेध इष्यते ३
अभितो द्वादशस्तम्भा पञ्चहस्तसमुच्छ्रिताः
तन्मध्ये स्थापनीया स्युरष्टहस्तोन्नताश्चतुः ४

पञ्चभागैकभागं तु निखन्यास्ते महीतले
तूलान्तोपतूलाद्यांश्च फलकाणि शुभानि च  ५
संस्थाप्य भौमं त्रितयं कर्तव्यं सुमनोहरम्
रत्निमात्रस्थलं त्यक्त्वा भित्तिः कार्या समन्ततः  ६
चतुर्द्वाराण्यलिन्दद्यैर्युक्तानि परिकल्पयेत्
हस्तमात्रप्रविष्टानि चतुर्हस्तोच्छ्रयाणि च  ७
त्रिशिखा षड्भुता पञ्च हस्तपट्टयुतानि च
बोधिन्यग्रोधयज्ञाटप्लक्षवृक्षोद्भवानि च  ८
तोरणानि चतुर्दिक्षु स्थापये द्वारदेशतः
द्वाराणां पार्श्वयोस्थाप्यौ ध्वजौ द्वौ द्वौ क्रमेण वै  ९
स्थापयेत् पूर्वभागे वा ध्वजमेकं विचक्षणः
दिक्पटान् स्थापयेत्पश्चात् वाहनायुधलाञ्छितान्  १०
ततस्तम्भचतुष्कस्य तत्र मध्ये विचक्षणः
वेदिकां रुचिरान् कुर्यान्नवभागैकभागतः  ११
विस्तारार्धसमुत्सेधा दर्पणोदरसन्निभाम्
कुण्डानि विधिवत्कुर्यात्तद्वेद्यापरितोन्न वा  १२
चतुरश्राणि वृत्तानि क्रमादिक्षु विदिक्षु वै
कुर्यादिन्द्रेशयोर्मध्ये प्रधानं वृत्तकुण्डकम्  १३
कृत्वैवं यागशालां च पूर्वमेव मनोरमम्
गोमयेन समालिप्य वितना फलपल्लवैः  १४
भूषयेत्पुष्पमाल्याद्यैः नानाविभवविस्तरैः
तद्विद्धि शुद्धं प्रकुर्वीत वक्ष्यमाणेन वर्त्मना  १५
प्रथमं चात्मशुद्धिस्याद्द्वितीयं गणपार्चनम्
तृतीयं गव्ययोगं स्याच्चतुर्थं मार्जनं भवेत्  १६
पञ्चमं लेपनं चैव षष्ठं चैव विकीरणम्
सप्तमं पुष्पविक्षेपं मुद्रासन्दर्शनं परम्  १७

नवमं देवताध्यानं दर्भस्य वेष्टनं परम्
एकादशं पञ्चगव्यसमुक्षणमुदीरितम् १८
अष्टगन्धोक्षणं चोर्ध्वं दिगीशाप्यर्चनं परम्
चतुर्दशं च संप्रोक्तं कलशद्वारपूजनम् १९
एवं कर्माणि चोक्तानि तद्विशुद्धौ चतुर्दश
आचार्यः परिशुद्धात्मा वामान्यार्घ्यं करस्थितः २०
द्वारपालौ तु संपूज्य विधिवद्द्वारपश्चिमे
प्रविश्य यागशालान्तमस्त्रदृष्ट्या विलोक्य च २१
भावयेन्मनसा दिक्षु दिक्पतीन् रक्षणोद्यतान्
कृत्वा प्रदक्षिणं तत्र नैर्ऋत्यां दिशि देशिकः २२
उपविश्यासने शुद्धे वाससा शागताननः
गुर्वादीनभिवन्द्याथ भूतशुद्धिं समाचरेत् २३
ततः कराङ्गविन्यासं लिपिन्यासादिकं न्यसेत्
गणेशं साङ्गमभ्यर्च्य स्थण्डिले कुसुमादिभिः २४
दापयेदथ नैवेद्यं भक्त्या स्वादुसमन्वितम्
योजयेत् पञ्चगव्यानि दुर्गामन्त्रैस्तु पञ्चभिः २५
एकांशकं तु गोमूत्रं गोमयाम्बु तदर्धकम्
सप्तांशकं तु गोक्षीरं त्र्यंशकं तु दधि स्मृतम् २६
आज्यमेकांशमित्येवमेषां मानं समीरितम्
अस्त्रमन्त्रेण संस्पृष्ट्वा साष्टोत्तरशतं जपेत् २७
पालाशपल्लवैः पश्चात् सदर्भैर्यागमण्टपम्
वह्न्यादीशानपर्यन्तं वायुबीजेन मार्जयेत् २८
ततस्तानि विनिक्षिप्य शाङ्कर्यां दिशि देशिकः
देवीगायत्रि मन्त्रेण लेपयेद्गोमयाम्भसा २९
ततोऽस्त्रमनुना राजी शतवाराभि मन्त्रिताः
विकीर्य मार्जयेन्मुष्ट्या पुरेव मनुवित्तमः ३०

पात्रे तानि क्षिपेद्राजी मुष्टिं तामीशकोणके
प्रक्षाल्य हस्तौ मूलेन पुष्पाणि दश दिक्षु च ३१
निक्षिप्य चक्रमुद्रां च दर्शयेत्तस्य मन्त्रतः
पुरेव मार्जनं कुर्याल्लेपनं यागमण्टपे ३२
भावयेन्मनसा शक्तिं मण्टपाधिष्ठितां ततः
ससूत्रदर्भमालां च युक्ताम्बोधिद्रुपल्लवैः ३३
अस्त्रेणाष्टशतं जप्त्वा कापोतं वेष्टयेत्तया
पञ्चगव्ये समभ्युक्षे दुर्गामन्त्रजपं गुरुः ३४
भूयोऽपि विकिरान्मन्त्री विकिरेन्मार्जयेत्ततः
गन्धतोयेन संप्रोक्षेन्मनुनापः पुनन्त्विति ३५
ततस्तद्वेदिकायां तु कुशपुष्पाक्षतानपि
प्रविन्यसेद्विषेत्वादि वेदमन्त्रेण मन्त्रवित् ३६
दिक्पालानतपुष्पाद्यै क्रमशः पूजयेदिह
तालत्रयं दिशाबन्धमग्निसालमथास्त्रतः ३७
विधायेशानदिग्भागे पद्मे शाल्यादिसंयुते
अभ्यर्च्य पीठं विन्यस्य कलशं जलसंभृतम् ३८
स्वर्णकूर्चादि विन्यस्य देवीं मूलेन देशिकः
आवाह्ये गन्धपुष्पाद्यैस्साङ्गं संपूजयेत्ततः ३९
वामे करकमापूर्य विधिनावाह्य वर्धनीम्
अस्याश्च चक्रमन्त्रेण गन्धाद्यैः परिपूज्य च ४०
ईशादीशानपर्यन्तं मण्टपस्यारिमन्त्रतः
वर्धन्यां पातयेन्मन्त्री जलधारां समन्ततः ४१
कलशं पृष्ठतो नीत्वा विकिरोपरि विन्यसेत्
संपूज्याच्छाद्य वस्त्राभ्यामुभयं परिपूजयेत् ४२
इत्थं कृत्वा समासेन यागमण्टपसंस्कृतिम्
अस्त्रयागं ततः कुर्यात्प्रवक्ष्ये तद्विधिं क्रमात् ४३

स्थण्डिलस्थापनं पूर्वं द्वितीयं कलशार्चनम्
तृतीयं चास्त्रशुद्धिः स्याच्चतुर्थं तोरणार्चनम् ४४
द्वारार्चनं पञ्चमं स्यात् षष्ठं दिक्पालपूजनम्
ध्वजार्चनं सप्तमं स्यादस्त्रयागं तथाष्टमम् ४५
नवमं लंगलाष्टानां यजनं परिकीर्तितम्
एवं तु नव कर्माणि विधेयान्यस्त्रयागके ४६
वेदिमध्ये लिखेत्तत्र नव कोष्ठानि मध्यमे
पङ्कजं स्वस्तिकान्यष्टौ दिशान्यपरितो लिखेत् ४७
पञ्चवर्णकचूर्णैश्च रञ्जयित्वा मनोरमैः
द्रोणाष्टशालिभिः पद्मं तदर्धैस्तण्डुलैश्शुभैः ४८
तण्डुलार्धतिलैर्भूष्य दर्भकूर्चानि विन्यसेत्
तत्तदर्धैश्च शाल्याद्यैः स्वस्तिकानि विभूषयेत् ४९
पीठपूजां ततः कृत्वा कुसुमाद्यैरपि क्रमात्
अस्त्रेणाभ्युक्षितान् कुम्भान् नवभेदादि निर्मितान् ५०
सूत्रैस्संवेष्ट्य सन्धूप्य प्रणवेन प्रविन्यसेत्
अष्टाङ्गुलसमुत्सेधां तच्चतुर्थां शविस्तृताम् ५१
शतनिष्कसमाक्लृप्तां नवरत्नविचित्रिताम्
ध्यानलक्षणसंयुक्तां सर्वावयवसंयुताम् ५२
देव्याश्च प्रतिमां तत्र मध्यमे कलशे न्यसेत्
तदर्धदर्ध्यविस्तारैः पञ्चाशन्निष्कनिर्मिताः ५३
पञ्चरत्नसमायुक्ता विद्येशि प्रतिमांस्ततः
गन्धतोयैश्च संपूर्य जलैर्वा निर्मलैस्ततः ५४
कलाश्चावाह्य तां देवीं यागेशीं मध्यमे घटे
गन्धाद्यैरर्चयित्वाथ ध्यात्वा सावरणान्विताम् ५५
ततश्चावाह्य विद्येशीः पूर्वादि कलशेषु च
पूजयित्वा यथान्यायं ॐनमोऽन्तस्तु नामभिः ५६

पल्लवैस्समलङ्कृत्य तद्वक्त्राण्यथ देशिकः
तदूर्ध्वे विन्यसेत्साधुं नालिकेरफलान्यपि ५७
आच्छाद्य वस्त्रयुग्मेन मृदुलेन नवेन च
उत्कूर्चानि प्रविन्यस्य साङ्गमभ्यर्चयेत्ततः ५८
नैवेद्यं दापयित्वा तु पाद्यादीन् परिकल्पयेत्
अस्त्राण्यथ समाहृत्य संप्रोक्ष्य प्रोक्षणीजलैः ५९
शोषणाद्यैश्च संशोध्य तोरणादीन् ततोऽर्चयेत्
यज्ञेशं पूजयेन्मन्त्री पूर्वद्वारास्थतोरणे ६०
प्रभाकरां जयं याम्ये मङ्गलाख्यं तु वारुणे
सौम्ये प्रभाख्यं संपूज्य गन्धाद्यै स्वस्वनामभिः ६१
कन्यकाद्याश्च पूर्वादि द्वारपाः पूजयेदथ
कन्यका कामिनीं चैव पूर्वे द्वारि समर्चयेत् ६२
दक्षिणे वसुनीथां च प्रमथां च समर्चयेत्
वारुणे वैष्णवी चैव लोहितां च समर्चयेत् ६३
उत्तरे च सुदण्डां च महादण्डां च पूजयेत्
दिक्पालानथ पूर्वादि तत्तन्मन्त्रे यजेत्ततः ६४
कालीं करालीं विरजां मन्दरां विन्ध्यवासिनीम्
सुप्रभां सिंहवक्त्रं च तत्परां दैत्यमर्दिनीम् ६५
इमा ध्वजेषु पूर्वादि संयजे स्वस्वनामभिः
अथवा ध्वजयेकंश्चे न पूर्वाद्यमु यजेत् ६६
एवमिष्ट्वा ततो मन्त्री बलिं ताभ्यो हरेत् क्रमात्
ततः क्रमेण विधिवत् तत्तद्द्वारैस्तु देशिकः ६७
स्वस्तिकानि समालिख्य शाल्यादींश्च प्रपूरयेत्
सुदृढान् कलशान् न्यस्य हैरण्यप्रतिमायुतान् ६८
पूरितान् शुद्धतोयैश्च शोभितान् फलपल्लवैः
पृथगाच्छादितांश्चैव नववस्त्रद्वयेन च ६९

तेषु क्रमात्तोरणादि देवताश्च समर्चयेत्
दापयेदथ नैवेद्यं पाद्यादींश्च ततः परम् ७०
गन्धाद्यैः पूरयेच्चक्रं मध्यकुम्भसमीपतः
अस्त्राणि वज्रपूर्वाणि शोधितानि पुरेव च ७१
स्थापयेत्परितस्तत्र पूर्वाद्यष्टदिशासु च
ईशान्यां चैव नैर्ऋत्यां पद्मचक्रं ततो न्यसेत् ७२
स्वस्वनामपदैर्मन्त्रैः नैवेद्यान्तं यजेत् क्रमात्
ततो बहिर्न्यसेदष्टमङ्गलानि यजेद्बुधः ७३
श्रीवत्सं पूर्णकुम्भं च भेरीदर्पणमत्समान्
अङ्कुशं शङ्खमावर्तमेतत्स्यान्मङ्गलाष्टकम् ७४
रामावरुणवायूंश्च रविविष्णुगणेश्वरान्
गङ्गां च शशिभिन्तेषु क्रमात् संपूजयेदिमान् ७५
कृत्वैवमस्त्रयागं च बन्धयेदथ कौतुकम्
तद्विधिं क्रमयोगेन वक्ष्ये सर्वार्थसाधनम् ७६
पुण्याहवाचनं पूर्वं द्वितीयं तु समर्चनम्
तृतीयं तु निवेद्यं स्याच्चतुर्थं प्रार्थनं भवेत् ७७
सूत्रबन्धं तु मर्धं स्यात् षष्ठं स्याद्भक्ततोषणम्
कर्माणि षड एतानि कौतुकग्रन्थिने विधौ ७८
स्थण्डिलं च समालिप्य देवीबिम्बाग्रतो गुरुः
सपूगफलताम्बूलं सिततण्डुलशोभितम् ७९
पात्रं स्वर्णादिजं तस्मिन् आधारोपरि विन्यसेत्
स्वर्णजं रौप्यजं चैव क्षौमकार्पासजं तु वा ८०
नवतन्तुसमायुक्तं ग्रन्थित्रयसमन्वितम्
प्रकोष्ठं परिणाहाढ्यं हरिद्रामूलसंयुतम् ८१
सूत्राणां संलयं तत्र विन्यसेत्पात्रमध्यतः
पुण्याहं वाचयेत्पश्चात् मूर्तिपाद्यै द्विजोत्तमैः ८२

स्थण्डिले मूलशक्तिं च पूजयेद्देशिकोत्तमः
इच्छाशक्तिं ज्ञानशक्तिं क्रियाशक्तिं तथैव च  ८३
यन्त्रिकायां तथा पत्रे तण्डिलाधे क्रमाद्यजेत्
ततो नाम्ना देशिकस्तु क्रमात् सूत्रेषु पूजयेत्  ८४
अनन्तं गुलिकं चैव वासुकी तक्षकं ततः
कार्कोटकं महापद्मशङ्खपद्ममहासुरान्  ८५
ग्रन्थित्रये यजेन्मन्त्री ब्रह्माविष्णुमहेश्वरान्
ग्रन्थिनामान्तरले च नाम्नां शक्तित्रयं क्रमात्  ८६
एवं संपूज्य गन्धाद्यै नैवेद्यमथ दापयेत्
ततः पुष्पं समादाय प्रार्थयेत्तां महेश्वरीम्  ८७
नमस्तेऽस्तु महादेवि विश्वावास जगन्मये
ब्रह्मादि स्थावरान्तानां कारणात्मकिते नमः  ८८
कौतुकं बन्धुमिच्छामि त्वमनुज्ञातुमर्हसि
इति संप्रार्थ्य तां देवीं विकीर्य कुसुमाञ्जलिम्  ८९
स्पृष्ट्वा सूक्तानि पठये दुर्गासूक्तादिकान् गुरुः
रुद्रसूक्तं विष्णुसूक्तं ब्रह्मसूक्तं ततः परम्  ९०
श्रीसूक्तं पवमानं च चतुर्दिक्षु यथाक्रमम्
मूलमन्त्रमनुस्मृत्य दुर्गाया दक्षिणे भुजे  ९१
सूत्राग्रपृष्टसंयोगं पाणिपृष्ठे भवेदथि
कराभ्यामपि बध्नीया दुर्गासूक्तमुदङ्मुखः  ९२
बृहत्सामेति मन्त्रेण त्र्यम्बकेन च मन्त्रतः
भस्मं स्पृष्ट्वा ततो मन्त्री मूलमन्त्रसमुच्चरन्  ९३
आचार्ययजमानाद्य मूर्तिपाश्च ततः परम्
बध्नीय ऊर्णसूत्रैश्च निजे दक्षप्रकोष्ठके  ९४
ततस्तां किञ्चिदभ्यर्च्य मूलेन कुसुमादिभिः
निवेदितानि वं स्वादु फलताम्बूलकानि च  ९५

दत्वा भक्तजनेभ्यश्च तोषयेद्यजमानकः
जयमङ्गलवाद्यांश्च शङ्खभेर्यादि निस्वनान् ९६
वर्तनं वा येष्टिं भिन्ना नागा नरवैरपि
विनोददर्शनं चैव कौतुकार्थं तु कारणात् ९७
इति श्रीविजयागमे
मण्टपसंकराद्यस्त्रयागकौतुकबन्धविधिः चतुस्त्रिंशत्पटलः

अतः परं समासेन वक्ष्ये होमविधिं क्रमात्
सर्वपापप्रशमनं सर्वकामफलप्रदम् १
प्रथमं चात्मशुद्धिं स्याद्द्वितीयं कुण्डशोधनम्
उल्लेखनं तृतीयं स्याच्चतुर्थं विष्टरार्चनम् २
देवतावाहनाद्यां स्यात्पञ्चमं परिकीर्तितम्
पावकानयनं षष्ठं सप्तमं तद्विशोधनम् ३
अष्टमं चान्तराग्नेश्च योजनाद्यं समीरितम्
वह्निसंस्थापनञ्चोर्ध्वामिन्धनं स्थापनं परम् ४
एकादशं चोज्वलमुपस्थानं ततः परम्
त्रयोदशं तु जिंह्वादि न्यासनं समुदीरितम् ५
ततः परिसमूहाद्यं पात्राणां सादनादिकम्
प्रोक्तं पञ्चदशं ब्रह्मा वाहनाद्यं तु षोडशम् ६
तपनाद्यं सप्तदशं ततः स्त्रुक्स्त्रुवशोधनम्
एकोनविंशं परिधीन्न्यसनाद्यं समर्चनम् ७
विंशं प्रोक्तं चैकविंशं नेत्रस्योद्घाटनादिकम्
द्वाविंशं तु समुद्दिष्टं गर्भाधानादि कर्म च ८
ततो विघ्नेशहवनं संमुखीकरणं भवेत्
चतुर्विं शं पञ्चविंशं नाडीसन्धानमीरितम् ९
षड्विंशप्रोदितं कर्म वह्नेष्टिहरणादिकम्

पक्वहोमं सप्तविंशं द्रव्यहोमं ततः परम्  १०
एकोनत्रिंशकं स्विष्टकृदाद्यं समुदीरितम्
पूर्णाहुत्यादिकं त्रिंशमिति त्रिंशमुदीरितम्  ११
अत्र तानि विधेयानि कर्माणि हवने विधौ
गत्वा कुण्डान्तिकं मन्त्री विष्टरे पूर्वदिङ्मुखः  १२
उपविश्य समानीय साधनान्युचितानि वै
आत्मशुद्धिं पुरा कृत्वा ततो जिह्वाङ्गमूर्तिभिः  १३
विन्यसेदात्मनो देहे मन्त्री स्वस्व पदे पदे
उद्धियन्ते च ते न्यासा स्थानानि च यथाक्रमम्  १४
न्यासं कलने काले पुरस्ताज्ञातवेदसः
ततः संपूजयेन्मूर्ध्नि स्वगुरून् देशिकोत्तमः  १५
हृत्पद्मे पूजयेद्देवीं गणेशानमथोर्चयेत्
कुण्डशुद्धिं प्रकुर्वीत वक्ष्यमाणेन वर्त्मना  १६
यस्मादृतेऽग्नौ व्यर्थास्युरशुद्धित्वात्कृता क्रियाः
मूलमन्त्रजपन् मन्त्री तत्कुण्डं च समीक्षयेत्  १७
ततस्तत्परितो दर्भैः अस्त्रमन्त्रेण ताडयेत्
तेन दिग्बन्धं कृत्वा वर्मणा प्रोक्षयेत्ततः  १८
तारेण खननं कुर्यान्मृत्तिके हन मन्त्रतः
उद्धरेन्मृत्तिकां पश्चात् पूरयेद्धृदयाणुना  १९
दृशा समीकृतं कुर्यात् सेचयेदमुना पुनः
कुट्टायेदस्त्रमन्त्रेण मार्जयेत्कवचाणुना  २०
उपहोमं तदार्धं स्यात्त्रिंशं स्विष्टकृदादिकम्
पूर्णाहुत्यादिकं चैकत्रिंशिकं समुदीरितम्  २१
लेपनं हेतिमन्त्रेण कलाभिस्तुलनात्मकम्
त्रिसूत्रीकरणं कुर्यात्कवचेनार्चयेद्धृदा  २२
अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैस्ततः

चतुष्पथं तनुत्रेण तनुयादक्षपाटनम् २३
अष्टादशैते संस्काराः कुण्डशुद्ध्यर्थमीरिताः
चतुरश्रमथास्तीर्य तन्मध्ये सूक्ष्मवालुकैः २४
सरिद्वरं समादाय परस्परसमायुतम्
पूर्वाग्रमुत्तराग्रं च लिखेदेवाष्टकं बुधः २५
भावन्त्येकोनपञ्चाशत्पदान्यत्र तदा स्फुटम्
बाह्यशाङ्करकोष्ठादि मध्यकोष्ठावसानकम् २६
अकारादि हकारान्तां तेषु कोष्ठेषु मातृकाम्
प्रदक्षिणवशेनात्र विलिख्य तदनन्तरम् २७
विंशद्दर्भकृतां मुष्टिं सकूर्चां तालसम्मिताम्
संप्रोक्ष्य विष्टरार्थं तु विन्यसेदत्र देशिकः २८
तस्मिन् साष्टदलं पद्मं कर्णिकाकेसरोज्वलम्
ध्यात्वा पीठं यजेद्वह्नेश्शाक्तेयं पौरुषं ततः २९
तत्र हृल्लेपया देवीमावाह्य हृदयाम्बुजाम्
भावयेत्तमुदाराङ्गीं सर्वाभरणभूषिताम् ३०
अङ्गारसदृशाभाभिरुज्वलन्तीं चतुर्भुजाम्
श्वेतरूपाभ्रमानीतस्त्रीरूपा कौशिकी तथा ३१
ऋषिकाश्यपनाम्न्याग्निदेवाख्या विश्वरूपिका
बहुरूपेति विख्याता दुर्गायाः परिवारकाः ३२
इमाः क्रमेण पूर्वादि पद्मपत्रेषु कल्पयेत्
ततस्त्वङ्गादि मुन्यादि देवी देवौ प्रविन्यसेत् ३३
जकाराद्यैश्च षड्वर्णैः प्रथमाया रुचस्ततः
क्रमात् पाद्यार्घ्यकाचाममधुपर्कान्यतः परम् ३४
स्नाने प्रोक्षणकं चैव दुर्गायाः परिकल्पयेत्
नकारेण च वै गन्धं कुङ्कुमं रक्तचन्दनम् ३५
कर्पूरचन्दनाक्तानि कुसुमानिवा

दद्या षोडश वाळ्यर्णैनादिषड्भिस्तथाक्षरैः ३६
धूपं दीपं च नैवेद्यं ताम्बूलं चार्घ्यमाचमम्
दापयेद्वादि शेषार्णै पुष्पाणि सुरभीणि च ३७
श्वेतरूपाधिका कन्या गन्धाद्यैरथ पूजयेत्
ततः पार्श्वे महादेव्या विष्णुबीजमनुस्मरन् ३८
आवाह्य पुरुषं तत्र विन्यस्याङ्गानि चिन्तयेत्
कारणं जगतां विष्णुं सर्वज्ञं सर्वसाक्षिणम् ३९
अनादिनिधनं शुद्धं साक्षाद्ब्रह्मस्वरूपिणम्
एवं ध्यात्वोपचारैश्च समभ्यर्च्य यथाविधि ४०
विष्णुबीजेन तारादि नमोन्तेन ततः परम्
तदेकतां समापन्नं भावयेत्तं विचक्षणः ४१
ततस्त्वरणिसंभूतमनलं मणिजं तु वा
श्रोत्रियागारजं वापि भस्मधूमादिवर्जितम् ४२
निधाय पात्रे चानीय कुण्डयोनौ प्रविन्यसेत्
वह्निबीजजन्मन्त्री क्रव्यादांशं परित्यजेत् ४३
ततः प्रक्षालयेद्वस्त्रौ प्रोक्षयेदस्त्रमन्त्रतः
उच्चरन् मारुतग्न्यम्बुबीजानि तनुयात् क्रमात् ४४
शोषदाहप्लावनादि दक्षदृष्ट्यादिवीक्षणैः
आकुण्डनात्ततो दीप्तं बहिः पिङ्गलया गुरुः ४५
विभाव्य निर्गतं तत्र योजयेदान्तरानलम्
दर्भद्वयेन संस्पृष्ट्वा जप्त्वा तारेण चाष्टशः ४६
धेनुमुद्रां प्रदृश्याथ रक्षयेदस्त्रमन्त्रतः
एवं कुण्ठ्य तनुत्रेण तनुत्रेण गुरूस्तदनुमूलतः ४७
संपूज्याथ प्रविन्यस्य जानुयुग्मं महीतले
कुण्डोर्ध्वं त्रिः परिभ्राम्य वह्निबीजमनुस्मरन् ४८
तन्मध्ये विन्यसेदग्निमात्मनोऽभिमुखं गुरुः

काष्ठान्यर्घ्याम्बुना प्रोक्ष्य शिरसा निक्षिपेच्छुचो ४९
सोमचित्पिङ्गलान्ते तु हृनद्वन्द्वं दहद्वयम्
पचद्वया वदेत्पश्चात्सर्वज्ञा ज्ञोपयेद्विः ५०
अमुना मनुना मन्त्री ज्वलयेदमलं शतैः
अग्निप्रज्वलितं वन्दे जातवेदं हुताशनम् ५१
सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम्
प्राञ्जलिर्मनुनानेन गुरुस्तमुपतिष्ठतु ५२
ततो जिंह्वाङ्गमूर्तीनां कृशानोर्मनुभिर्न्यसेत्
हिरण्या गगना रक्ता कृष्णाद्या सुप्रभा मता ५३
बहुरूपातिरिक्ताग्नेजिंहास्सप्तेति कीर्तिताः
सनलानिलवामाक्षी बिन्दुभिर्यादिसान्तकैः ५४
अक्षरैर्युक्तमूलस्तास्सचतुर्थी नमोन्तकैः
लिङ्गेऽपाने तथा मूर्ध्नि वदने च गुरूत्तमः ५५
नासिकानयनद्वन्द्वे सर्वाङ्गेषु च विन्यसेत्
ऋषिर्भगस्समादिष्टो गायत्री छन्द ईरितः ५६
अग्निश्च देवता प्रोक्ता मूर्धादि न्यासतादमून्
सहस्रार्चिः स्वस्ति पूर्णा उत्तिष्ठ पुरुषस्तथा ५७
धूमव्यापी सप्तजिंह्वो धनुर्धर इति क्रमात्
एतेऽङ्गमनवः प्रोक्ता स्वस्वजातिसमद्वितः ५८
स्थानेष्वमून् प्रविन्यास्य देशिको हृदयादिषु
जातवेदास्सप्तजिह्वो हव्यवाहनसंज्ञकः ५९
अश्वोदरजसंज्ञाश्च ततो वैश्वानरां ह्वयः
कौमारतेजा स्याद्विश्वमुखो देवमुखस्तथा ६०
युवाग्नये पदाद्याश्च ॐनमोऽन्ताः क्रमादमून्
मूर्ध्नां सपार्श्वकटयन्ध्यं कटिपार्श्वां सकेषु च ६१
देवेष्वतेषु विन्यस्येत्प्रदक्षिणवशाद्बुधः

ततस्सङ्गृह्य समिधो मन्त्री लक्षणलक्षिताः ६२
अष्टादश पुनस्तिस्रो बाहुमात्रसमुच्छ्रिताः
एकीकृत्य समाबन्ध्या विधिवत्कृतरज्जुना ६३
दक्षिणे च प्रविन्यस्ये दर्भमुष्टिं तथोत्तरे
ततः परिसमूह्याग्निं जुष्टोदे इति मन्त्रतः ६४
परिषिच्य जलेनाथ देवस्य त्वादिमन्त्रकैः
पूर्वोत्तराग्रताग्रैश्च शुद्धै दर्भचतुष्टयैः ६५
परिस्तरेत्क्रमान्मध्ये मेखलायां विभावसोः
कुण्डस्योत्तरभागे तु कुशानास्तीर्य भूतले ६६
द्वन्द्वरूपेण हस्ताभ्यां क्रमेणास्मिन्नधोमुखम्
प्रोक्षणीं चरुपात्रं च स्रुक्स्रुवौ घृतपात्रकम् ६७
प्रणीतां साधयेदिध्मकुशमुष्टि च देशिकः
अर्घ्योदकेन संप्रोक्ष्य प्रोक्षणीमुन्मुखं न्यसेत् ६८
तत्र दर्भद्वयं न्यस्य संपूर्याभिमुखं जलैः
कराभ्यां तत्रिरुत्पूय तज्जलैः प्रोक्ष्य विन्यसेत् ६९
तत्पश्चकुशमुष्टीध्मग्रन्थिं विन्यस्य वर्मणा
अभ्युक्ष्य पात्राणयेतान्युन्मुखीकृत्यपप्रोक्षयेत् ७०
ततो ब्रह्माणमावाह्य दक्षिणेऽग्ने समर्चयेत्
तत्पुरस्तात्प्रणीतान्तां निधायाद्भिः प्रपूरयेत् ७१
गन्धाद्यैर्वरुणं पूज्य दोभ्यां नासान्तमुद्धरेत्
धनेशेश्वरयोर्मध्ये विन्यसेत्तां कुशोपरि ७२
ततोऽस्त्रमन्त्रेणाभ्युक्ष्य घृतस्थालीं द्विजोत्तमः
तत्र गोघृतमापूर्य नेत्रमन्त्रेण वीक्षयेत् ७३
कुण्डोर्ध्वमेखलायां तु वायव्यां दिशि देशिकः
अङ्गारोपरि तान्यस्य हृन्मन्त्रेण प्रतापयेत् ७४
दीप्तदर्भद्वयेनाथ हृदा संस्पृश्य तद्धृतम्

निक्षिप्याग्नौ पुनर्दीप्तदर्भयुग्मेन देशिकः ७५
नीराज्याज्यं तनुत्रेण तदग्नौ निक्षिपेत्ततः
चतुष्टयकुशाग्राणि छित्वा सर्पिषि विन्यसेत् ७६
शिष्टैः कुशैश्च सन्दीप्तैर्घृतमस्त्राणुना गुरुः
त्रिवारं दर्शयित्वा तु जातवेदसितान् क्षिपेत् ७७
घृतपात्रमथोद्धृत्य कुण्डयोन्योपरि द्विजः
कुशास्तीर्णे न्यसेदग्नावङ्गारान् योजयेच्च तान् ७८
संक्षाल्य हस्तौ संगृह्य दर्भौ प्रादेशसंमितौ
अङ्गुष्ठोपकनिष्ठाभ्यामुत्पुनीया तदास्त्रतः ७९
पुनर्हृदयमन्त्रेण कुशाभ्यामात्मसंमुखम्
तद्वत्सप्रवनं कुर्यात्तद्धृते मन्त्रवित्तमः ८०
क्रमेण तापनं चैव पवित्रीकरणं पुनः
अभिद्योतनकं चैवोद्योतनोत्पवने ततः ८१
प्रोक्ता संप्लवनं चेति संस्काराः षडिहाज्यके
दक्षवामकराभ्यां तु स्त्रुक्स्त्रुवौ दर्भयुग्मकः ८२
गृहीत्वाधोमुखं पश्चात्तापयेदनले त्रिशः
वामभागे सुचस्थाप्य स्त्रुवं दर्भद्वयं पुनः ८३
व्यत्यस्य नस्तयोरग्रे मध्यमूले स्त्रुवस्य च
शोधयेद्दर्भयुग्माग्रमध्यमूलैस्तथामुना ८४
अग्रमध्यममूलेषु कुशयुग्मस्य शोधयेत्
न्यस्त्वा दर्भद्वयं वामे सुवर्घ्याम्बुहोक्षयेत् ८५
पुनः संताड्य तद्वह्नौ घृतपात्रे निधापयेत्
एवमेव स्त्रुचं शोध्य न्यसेत्तत्रैव तां पुनः ८६
अर्घ्याम्बुहोक्ष्यत्तद्दर्भौ क्षिप्त्वाग्नौ शोधयेत् करौ
सदर्भमेखलायां तु पश्चिमे दक्षिणे मुखः ८७
उत्तरे परिधिन्न्यस्येद्धर्मनेत्रास्त्रमन्त्रकैः

पुरतोग्नीशगाग्रोद्व समिधौ विन्यसेद्भुदा ८८
ततो गन्धादिभिर्वह्निं वक्ष्यमाण क्रमेण च
संपूज्य भावयित्वाथ जिंह्वादि परिपूजयेत् ८९
वैश्वानरं जातवेदमिहावनपदं तथा
लोहिताक्षपदं ब्रूयात् सर्वकर्माणि साधया ९०
प्रणवाद्यग्निजायान्तो मनुरग्नेः समीरितः
शुक्लमाल्याम्बरधरं सर्वाभरणभूषितम् ९१
जटाकलपसंयुक्तं बालारुणसमद्युतिम्
प्रसन्नवदनाम्भोजं त्रिणेत्रं पद्मसंस्थितम् ९२
शक्तिस्वस्तिवराभीतिर्दधानं दोर्भिरुच्छ्रितैः
इत्थं संचिन्त्य तं वह्निं तेजोरूपं जगत्प्रभुम् ९३
जिंह्वास्ताः संयजेन्मध्ये ततः कोणेषु षट्स्वपि
केसरेष्वर्चयेद्वह्निं शिवरक्षोनलाश्रिषु ९४
पुरतश्च चतुर्दिक्षु हृदयादि षडङ्गकम्
शक्तिस्वस्तिकराम्भोजात्स्वर्णाभा मणिभूषिताः ९५
मूर्तिश्च पद्मपत्रेषु यजेदिन्द्रादिगादिकम्
ब्राह्म्यादींश्च तथेन्द्रादीन् वज्रादिन्यायुधान्यपि ९६
तत्तत्स्थानेषु यजता परितो जातवेदसः
प्रणीतायामिमां रज्जुं न्यसेद्वलयवत्ततः ९७
समित्समूहमाज्येन सम्यगाप्याह्य देशिकः
ततोऽनुयाजसमिधं प्रणीतोपरि विन्यसेत् ९८
ब्रह्मणोऽनुज्ञया पश्चादिध्महोमं समाचरेत्
तत्राज्ये कूर्चसंयुक्ते संस्कृते च ततः परम् ९९
ध्यात्वा शुक्लासितौ पक्षौ भागयोर्दक्षवामयोः
इडानाडीं वामभागे दक्षिणं पिङ्गलां ततः १००
सुषुम्नामध्यतो मन्त्री ध्यात्वा होमसमाचरेत्

दक्षभागस्त्रुवेणाज्यं गृहीत्वाग्ने हृदाणुना १०१
दक्षनेत्रेऽग्नये स्वाहेत्युच्चरन् जुहुयाद्गुरुः
वामतस्थाज्यमादाय वह्ने वामविलोचने १०२
हृदा जुहोतु सोमाया स्वाहेति समुदीरयेत्
मध्यनेत्रे ततो वह्ने गृहीत्वा मध्यतो घृतम् १०३
अग्नीषोमाभ्यां स्वाहेति हृन्मन्त्रेण हुनेत्ततः
पुनर्घृतं समादाय दक्षभागाद्धृदाणुना १०४
वह्निवक्त्रेऽग्नये स्विष्टकृते स्वाहेति होमयेत्
हेति संपातयेद्भागेष्वाज्यस्याद्बहुमात्रके १०५
एवं कृत्वाग्निनयनवक्त्रोद्घाटनमादरात्
अथाग्नौ ज्वलिते मन्त्री संस्कृतेन घृतेन च १०६
सतारव्याहृतीभिश्च वह्निमन्त्रीणवै त्रिशः
जिह्वाङ्गमूर्तिमनुभिः जुहुयाश्च सकृत्सकृत् १०७
ततोमं कृष्टवर्त्मानं ज्वालाजालसमुज्वलम्
दर्भयुग्मेन संस्पृष्ट्वा देशिको निश्चलेन्द्रियः १०८
जकारादि समस्तार्णै संजप्य त्रिष्टुभोद्बुधः
वह्निस्वरूपमापन्नामिति देवीं विभावयेत् १०९
आदौ मूलेन संपूज्य सोपचारमिमां बुधः
जुहुयात् समिधं मन्त्री ततस्तन्मनुपूर्वकम् ११०
पञ्चाभिश्चैव दुर्गाभिः मूलाणुभ्यां पृथक्पृथक्
अष्टाष्टाज्याहुतिर्हुत्वा क्रमेणैवं विचक्षणः १११
गर्भाधानादिकाः कुर्यात् क्रियश्चौलावसानकाः
गर्भाधानं च सीमन्तं जातकर्म ततः परम् ११२
स्यान्नामकरणं पश्चादुपनिष्क्रमणं पुनः
अन्नप्राशनकं चौलमिति सप्तोदिताः क्रियाः ११३
सापि यस्मात् कुमारीति विख्याता परमेश्वरी

तस्मादेतावदेवात्र संस्कारहवने क्रियाः ११४
स्रुवरणैव चतुर्वारमवदित्वा घृतं स्रुचि
स्रुवं पिधाय चाधोग्रं पुष्पं तदुपरि न्यसेत् ११५
तिष्ठन् कुचान्तमुद्धृत्य कराभ्यां तौ च स्रुक्स्रुवौ
बौषडन्तेन मूलेन वह्नौ पूर्णाहुतिं हुनेत् ११६
तत्तत्कर्मसमाप्तीनामुपविश्य मनुं वदेत्
पूर्णाहुतिरियं प्रोक्ता गर्भाधानादि कर्माणाम् ११७
पूर्वं प्रणवमुच्चार्या ॐन्तामग्निस्वरूपिणीम्
ततो देव्यैः पदं ब्रूयात्तत्तत्कर्माभिधानकम् ११८
पश्चात्कर्मकरामीति वह्निजायां ततो वदेत्
एवं सम्यक्समाख्यातो मन्त्रोऽयं समिधाहुतौ ११९
तारादि तत्तत्कर्माख्यं पर्यान्तं पूर्ववद्वदेत्
कृतशब्दं ततः कर्म समाप्तिमनुरुच्यते १२०
ततस्सूतकशुद्ध्यर्थं जातकर्मविधौ कृते
तत्परिस्तरणादीनि साधनानि परित्यजेत् १२१
आलिख्य गोमयजलैस्तत्कुण्डं मनुवित्तमः
संताड्य दर्भकूर्चेन प्रोक्षेदर्घ्यवारिभिः १२२
पूर्ववत्परिषेकाद्यं घृतस्रुक्स्रुवशोधनम्
प्रकुर्यान्निखिलं कर्म यथावदनुपूर्वकम् १२३
अथवा साधनं सर्वमस्त्रेणार्घ्यजलैरपि
अभ्युक्ष्य तनुयान्मन्त्री सर्वज्ञाकरणं मुखाः १२४
क्रियाजिह्वाङ्गमनुभिः पश्चान्मूर्तिमन्त्रैर्ध्रुवादिकैः
स चतुर्थ्यग्निजायान्तैर्हुनेदाज्याहुतिः क्रमात् १२५
जुहुयादथ ताराद्यैर्दश भेदविभेदितैः
महागणपतेर्मन्त्रैः पूर्वपूर्वान्वितैर्हुनेत् १२६
समस्तेन चतुर्वारममुना तदनन्तरम्

पीठं पूज्याथ तद्वह्नौ देवीं सावरणां यजेत् १२७
सर्पिषा मूलमन्त्रेण तन्मुखे मन्त्रवित्तमः
संमुखी करणार्थं च पञ्चविंशाहुतिर्हुनेत् १२८
देवताग्न्यात्मनामैक्यं भावयन् मूलमन्त्रतः
एकादशाहुतिर्नाडीसन्धानाय हुनेत्ततः १२९
एकैकमावृतीनां च देवताभ्यो घृताहुतिम्
ततस्त्वन्येषु कुण्डेषु विधिवत् संस्कृतेषु च १३०
आचार्यकुण्डादनलं पूर्वादि विहरेत् क्रमात्
ऋचातामग्निवर्णेति पुरोपस्थाय चानलम् १३१
विहृत्य कुण्डे पूर्वस्मिन् दक्षिणेऽग्नौ त्वमित्यृच
विश्वानिनः पश्चिमे च सौम्ये च पृतनाजितम् १३२
एवं वह्न्यादि कुण्डेषु विहरेदनलं पुनः
न्यस्त्वा जिह्वादि विन्यासं विधिज्ञा मूर्तिपा अपि १३३
ततः क्रिया प्रकृत्वा ता परिषेकमुखा क्रमात्
स्वस्वकुण्डे च ते सर्वे प्रोज्वलज्वलने तथा १३४
आवाह्य दारिकाद्याश्च मूर्तीशः पूजयन्तु च
सतारव्याहृतीभिश्च पीठमन्त्रैश्च मूर्तिपाः १३५
एकैकशश्च जुहयुः जिह्वादि मनुभिस्तथा
ऋत्विजो ये दुषाद्यश्च त्रिष्टुभा मनुना ततः १३६
पक्वाहुतिं च जुहयुः पञ्चभिश्च घृताहुतिम्
द्रव्याणामाहुतिं पश्चाज्जुहुयुर्देशिकादिकाः १३७
पालाश्यश्चैव पैप्पल्यः खादर्यो बैल्व इत्यमूः
दिग्विदिक्षु क्रमान्मध्ये पालाश्यः समिधः स्मृताः १३८
हविर्हविर्यवव्रीहि तिलसर्षपदौर्वकाः
द्रव्याणि सप्त चैतानि सर्वत्र हव ष्विह १३९
आज्यत्रिष्टुप् समाख्यातो मनुराज्याहुतौ ततः

समिद्धृतो मूलमनुः पूर्वादिगवलेषु च १४०
षडङ्गमनुवः प्रोक्ता मूलमन्त्रमथापि वा
साष्टाधिकं तु शतकं गुरुमूर्तिधराः पृथक् १४१
प्रतिद्रव्यं च जुहुयुः स्वस्व कुराडोज्वलानले
अथवा मूलकुराडाग्निहोमार्धं जुहुयुः क्रमात् १४२
उपहोमं ततो हुत्वा तत्तन्मन्त्रैः पृथक्पृथक्
जयाद्यैश्च हुनेन्मन्त्री प्रायश्चित्ताहुतिं ततः १४३
यदास्येत्यनुना पश्चाद्धुत्वा स्विष्टकृतं पुनः
ततो महाव्याहृतिभिः एकैकां सर्पिषाहुतिः १४४
ब्रह्मर्पणाख्य मन्त्रेण हुनेदष्टावनाहुतिः
हुवानुयाजसमिधं ततः पूर्णा घृतेन च १४५
ब्रह्माणं च विसृज्याथ शेषकर्मविधाय च
होमं समापयेयुश्च गुरुमूर्तिधरास्ततः १४६
एवमेव समुद्दिष्टदिनान्तं च दिने दिने
विहृत्य जनिनाग्निं तं प्रकृत्वाग्निमुखक्रियाम् १४७
जुहुयुर्देशिकाद्यास्ते द्रव्यैश्च समिदादिकैः
ऋत्विग्भिः सममाचार्य ततो होमं समापयेत् १४८
इति श्रीविजयागमे अग्निकार्यविधिपञ्चत्रिंशत्पटलः

बलिदानविधिं वक्ष्ये सर्वकामफलप्रदम्
सर्वदेवहितं चैव सर्वजन्तुसुखप्रदम् १
अन्नलिङ्गार्चनं पूर्वं दितीयं बलिबिम्बके
आवाहनं समुद्दिष्टं तृतीयं गमनक्रमम् २
चतुर्थं बलिपीठानां शोधनाद्यं समीरितम्
पञ्चमं देवतानां च ध्यात्वोपस्थानमीरितम् ३
षष्ठं समुदितं वारि पत्रपुष्पसमर्चनम्

सप्तमं चैव गन्धादिमुद्राः सन्दर्शना भवेत् ४
अष्टमं तु हविर्दानं पुष्पक्षेपं ततः परम्
देवतालीनसन्धानं दशमं मूलबिम्बके ५
एकादशं तु संप्रोक्तामन्नलिङ्गविसर्जनम्
एकादशेति कर्माणि बलिदानविधाविह ६
समुक्तानि क्रमेणैव कुर्याद्देशिकसत्तमः
साज्येन हविषा चारुलिङ्गं कृत्वा विधानतः ७
अस्त्रराजं समावाह्य कुसुमादिभिरर्चयेत्
मूललिङ्गेनतो मन्त्री सुगन्धकुसुमाक्षतैः ८
नित्यपूजोक्तविधिना प्रसन्नयजनं क्रियात्
सुगन्धाम्बरमाल्याद्यैस्स्वर्णरत्नविनिर्मितैः ९
भूषितायामलङ्कारैर्बलिमूर्त्यान्ततो गुरुः
प्रस्फुरं लिङ्गमध्यस्थ तेजोराशेः कणं मुदा १०
तत्र भावनया सम्यगावाह्यावाहनमुद्रया
बलिमूर्तिमिमां पश्चादीशमूर्तिं समुच्छ्रिताम् ११
गर्भालयाद्विजग्राभ्यां बहिरानययेत्ततः
तदग्रतस्त्वन्नलिङ्गमस्त्रराजसमन्वितम् १२
शिष्येणात्तबलिद्रव्यपात्रेण च सह स्वयम्
गच्छन् तदग्रतो मन्त्री सकूर्चबलिपात्रधृक् १३
भेरीशङ्खादिवाद्येषु ध्वनितेष्वग्रतो बहु
क्रमेण द्वारपालादि देवताभ्यो बलिं हरेत् १४
नित्यबल्युक्तमार्गेण चोत्सवे बलिकर्मणि
सर्वमत्र प्रकर्तव्यं देशिकेन्द्रेण साधरम् १५
अस्ति कश्चित् क्रियामन्त्रविशेषो वक्ष्यतेऽपि सः
त्रिशस्त्रिशोऽम्बुपत्राणि पुष्पाणि च हवींषि च १६
देवानि स्वस्वमनुना देवताभ्यः क्रमेण वैः

प्रोक्तः क्रियाविशेषोऽयं वक्ष्यते नु विशेषतः १७
उपस्थानमनुश्चैव देवतानां मनुः पुनः
तत्पार्षदमनुः पश्चान्मन्त्रं साधरणां दयम् १८
मालामन्त्रं सदां मन्त्रमित्युक्तो नु विशेषतः
यस्या यस्या देवतायां समुक्तोऽयं विशेषतः १९
तथा तथा चोद्ध्रियते सोऽपि सम्यक्समादिन
ताराद्यं देवता नाम सचतुर्थीं नमोन्तिकम् २०
नामधेयं जयादीनां द्वितीयान्तमुदीरयेत्
ततस्समर्चयामीति संवदेन्मन्त्रवित्तमः २१
धृवपूर्वां ॐद्विष्ठान्तां देवताख्यां पुनर्वदेत्
एवं तत्तद्देवतानां नामान्ते मन्त्रवित्तमः २२
पार्षदेभ्यः परं प्रोक्ता ततः पूर्ववदुच्चरेत्
सर्वत्र देवतानान्तपार्षदानां मनुद्वयम् २३
पूजायां बलिदाने च साधारणमिहोदितम्
नमस्ते द्वारिसंस्थायै प्रोज्वलन्त्यै महत्विषा २४
दृष्ट्या निहितदैत्यायै चण्डिकायै नमोनमः
नमस्ते द्वारसंस्थायै विजयन्त्यै महाबले २५
दृष्ट्या निहितदैत्यायै त्वम्बिकायै नमोनमः
उपस्थानं प्रकृत्वाभ्यां मन्त्राभ्यां द्वारपालिके २६
गन्धपुष्पाक्षताद्यैश्च सम्यक् संपूजयेत्ततः
सतारशक्तिमुच्चार्य ज्वलशब्दद्वयं पुनः २७
ॐन्तिकं चण्डिकाशब्दं हुंफट् द्वितयं वदेत्
वेदादि भुवनाधीशं वरान्ते वरदे पदम् २८
अम्बिकायै हुंफडन्ते वह्निजायां समीरयेत्
एतन्मनुभ्यामनयोः पीठयोर्बलिमाहरेत् २९
अनयोः पीठपार्श्वेऽथ पार्षदिभ्यो बलिं हरेत्

सिंहपीठं समासाद्य तदुपस्थानमाचरेत् ३०
वाहनाय महादेव्या गम्भीरनिनदाय च
अतुल्यबलवीर्याय सिंहराज नमोऽस्तु ते ३१
महाबलो मृगेन्द्रश्च क्रूरदंष्ट्रो गजान्तकः
अतीर्यो महानादो देवी बाहो मदोद्धतः ३२
तारादि नामभिश्चै व ॐन्नमोऽन्तैस्समर्च्य तम्
तस्य पीठे बलिं दद्यात् पार्षदेभ्यः स्वमन्त्रतः ३३
नमस्ते गजवक्त्राय पाशाद्यायुधधारिणे
उमापुत्राय शान्ताय गणाध्य नमोऽस्तु ते ३४
नमस्ते भूतनाथाय चन्द्रार्धकृतमौलये
स्वयम्भुवे त्रिणेत्राय शङ्कराय नमो नमः ३५
गणेशेश्वरयोः पश्चात् पीठे वं साद्य देशिकः
कृत्वोपस्थानमेताभ्यां मन्त्राभ्यां तौ समर्च्य च ३६
तन्मन्त्रेण तयोर्दत्वा पार्षदेभ्यो बलिं हरेत्
दिगीशानां ततो मन्त्री ततस्तालैश्च वाद्यकैः ३७
तत्तत्पीठं शनैर्गच्छेद्देवानां हर्षसिद्धये
तत्तन्मन्त्रेरुपस्थाय गन्धाद्यैरर्चयेच्च तान् ३८
वृत्रघ्नाय सुरेन्द्राय जिष्णवे वज्रबाहवे
सहस्रबाहवे चक्षुषे नित्यं नमस्तेऽस्तु पुरन्दर ३९
वैश्वानराय रुद्राय सर्वदेवमुखाय च
शक्तिहस्ताय देवाय नमस्ते हव्यवाहन ४०
दण्डहस्ताय भीमाय सर्वमृत्युप्रदाय च
प्रेतनाथाय कालाय धर्मराज नमोऽस्तु ते ४१
खड्गहस्ताय घोराय महाबलबलाय च
निशापराय धीराय राक्षसाधिपते नमः ४२
यादसामधिनाथाय सर्वभूतहिताय च

पाशहस्ताय शुभ्राय जलाधिप नमोऽस्तु ते ४३
उद्यदङ्कुशहस्ताय प्राणीनां प्राणदाय च
सदागताय शुद्धाय नमस्तेऽस्तु समीरण ४४
कालाधिपाय सौख्याय गदाहस्ताय धीमते
सर्वौषधि गणेशाय निशाधिप नमोऽस्तु ते ४५
दिगम्बराय शान्ताय त्रिणेत्राय कपर्दिने
त्रिशूलाङ्कितहस्ताय सदेशान नमोऽस्तु ते ४६
त्रयीमयाय लोकानां ईश्वरायाब्जधारिणे
स्वयम्भुवे विशुद्धाय नमस्ते चतुरानन ४७
अनन्तनामरूपाय नागानामधिपाय च
पातालवासिने चक्रधारिणेऽनन्त ते नमः ४८
आदौ देवादिमिन्द्रादि देवाख्यां प्रवदे क्रमात्
ततस्सुरादिशब्दं च ॐन्तामधिपतिं पुनः ४९
दुर्गान्ते पार्षदायाथ नमश्शब्दं पुनर्वदेत्
ततश्चेन्द्रादि शब्दान्ते पार्षदेभ्यो नमः पदम् ५०
नमो भूते पदं तेभ्योऽरिष्टपदमुच्चरेत्
कृद्धयश्च सद्धयो सख्यश्च सदसख्यश्च दं पुनः ५१
ततो वदेत् सर्वगणेभ्यो नमो नम इत्यपि
साधारणमनुश्चायं संप्रोक्ता सर्वदिक्षपि ५२
बलिं दत्वा यथान्याय्यं मनुनानेन देशिकः
क्रमादिन्द्रादि दिक्पालादीशान्यान्तामुदीरयेत् ५३
दुर्गाया भगवत्याश्च ये गणाः शब्दमुच्चरेत्
वज्रं शक्तिं वदेद्दण्डं खड्गं पाशं तथाङ्कुशम् ५४
गदां शूलाम्बुजे चक्रमेषामन्ते च बाणयः
श्वेतं रक्तं तथा कृष्णं श्यामं च शबलं पुनः ५५
पीतं सितं च कपिलं सूक्ष्मं धूमममून् क्रमात्

जस्वन्तान् प्रणिगद्यैषान्मन्ते पाक्षास्समीरयेत् ५६
भूयोऽप्येषामवसितौ जन्वन्तं लोहितं वदेत्
दिव्यन्तरिक्ष भौमांश्च पातालतलवासिनः ५७
तेभ्यस्ताभ्यो नमो युग्मं वह्निजायां ततो वदेत्
मालामन्त्रेण पानेन बलिं दत्वा पृथक् क्रमात् ५८
ये भूताः पदतं पूर्वं दक्षिणं पश्चिमं पदम्
उत्तरं च तथैतेषां जंते ब्रूयात्पदः पदम् ५९
निशाचराश्च रौद्राश्च सन्तो सन्तो वसेत्ततः
विरूपा विश्वरूपाश्च घोररूपाः पदं वदेत् ६०
महारूपाप्पदान्ते तु मृगास्यो विहगाननाः
पुष्टिकृतो तुष्टिकृतो कामदांश्च बलिं वदेत् ६१
इच्छन्ति तेषां वदतो बलिशब्दं हरामि च
महद्भ्य क्षुद्रकेभ्यश्च सर्वेभ्यः सोभ्य एव च ६२
ताभ्यां नतिद्वयं पश्चाद्वह्निजायामुदीरयेत्
अमुना मनुना चैव चतुर्दिक्षु सदां क्रमात् ६३
बलिं दत्वा मातृकाणां स्थानमासादयेत्ततः
वीरभद्र नमस्तेऽस्तु सर्वशत्रु भयङ्कर ६४
नमस्तेऽस्तु गणाध्यक्ष सर्वविघ्ननिवारण
इत्युपस्थाय संपूज्य वीरभद्रगणेशयोः ६५
वीरभद्राय शब्दान्ते विद्महे पदमुच्चरन्
ततो महाननायान्ते धीमहीत्युच्चरेत्पुनः ६६
तन्नश्शान्तः प्रचोदान्ते यत्पदं च ततो वदेत्
वदेत्तथैकदन्ताय विद्महे पदमुच्चरेत् ६७
स + न्त वक्रतुण्डञ्च धीमहीति पदं पुनः
तन्नो दन्ति वदेत् पश्चात् प्रपूर्वं चोदयात् पदम् ६८
ब्राह्म्यादि मातृकाणां च पूर्वापरगपीठयोः

एवं मनुभ्यामाभ्यां च बलिं दत्वा विचक्षणः ६९
ततस्तत्पार्षदेभ्याश्च तन्मन्त्रेण बलिं क्षिपेत्
व्योमात्क्रमेण मां चाथ हैं हों हौं च हूमप्यथ ७०
सतारे तद्बीजपूर्वैः स्वस्वनामान्दृभिः क्रमात्
समर्च्य चोपविष्ठेत मातृकास्तदनन्तरम् ७१
मातरः सर्वलोकानां देव्या अंशसमुद्भवाः
ब्राह्म्यादि मातृकाश्चैव युष्मभ्यं सततं मनः ७२
अमुना मनुना सप्त मातृका उप्तिष्ठतु
क्रमाद्यन्तां ब्रह्मभूतां रुद्रभूतां वदेत्पुनः ७३
स्कन्दभूतां विष्णुभूतां प्रतिभूतां प्रजादिकाम्
ततो ब्रूयादिन्द्रभूतां रुद्रभूतां तथैव च ७४
ॐन्तिकाङ्कुशहस्तां च शूलहस्तां पुनर्वदेत्
शक्तिहस्तां चक्रहस्तां गदाहस्तां वदेत्ततः ७५
वज्रहस्तां शूलहस्तामेषामन्ते च धीमहि
तदन्ते च वदेकं गोमुखब्राह्म्यादिकं पदम् ७६
ततः प्रचोदयाच्छब्दं प्रब्रूयान्मत्रवित्तमः
इत्युक्तैर्मनुभिश्चैव स्वस्वपीठे बलिं क्षिपेत् ७७
तत्पार्षदिभ्योऽथ पदं तत्तन्मन्त्रे बलिक्षिपेत्
नमो नमश्च युष्मभ्यां मातरो लोकमातरः ७८
तथैव च मनो नित्यं युष्मभ्यं सर्वमातरः
सर्वमातृगणाश्चैव युष्मभ्यं सततं क्रमः ७९
नमस्तेऽस्तु महालक्ष्मी नमो भूचरि खेचरि
एवं कृत्वा मातृकाद्या उपस्थानं समर्चयेत् ८०
नानारूपा पदान्ते तु मात्रादीनां तथाभिधाम्
जस्वन्तां क्रमशः प्रोक्त्वा दिशं प्रति व्यवस्थिताः ८१
दिव्यन्तरिक्ष भौमाश्च पातालतलसंस्थिताः

देव्या जायेनथायां तु मम ह्वतसमीरयेत् ८२
गृह्णन्तु प्रतिगृह्णन्तु पूजां सौम्यपदं वदेत्
ततश्च रूपधारिण्यः ताभ्यो देविपदं वदेत् ८३
भ्यो नमो नम अन्ते तु ठद्वयञ्च समीरयेत्
क्षीरार्णवन्ते भूतायै विद्महे पद्मधारिणे ८४
धीमहीति वदेत्पश्चात् तन्नो लक्ष्मी प्रचोदयात्
दण्डकान्ते पालिनी च विद्महे बहुमास्य च ८५
धीमहीति वदेत्तन्नः खेचर्यन्ते प्रचोदयात्
पूर्वाशादि चतुर्दिक्षु मात्राणामपि मध्यमे ८६
अधस्तादुपरिष्टाच्च मात्रादिभ्य इतीरितैः
मन्त्रैर्दद्याद्बलिं चासां पार्षदिभ्यो बलिं हरेत् ८७
भवपुत्राय भीमाय धनुर्बाणकराय च
कपर्दिने सिताभाय शस्तोतृभ्यं नमो नमः ८८
ततो गत्वा शस्त्रपीठमित्युपस्थाय पूजयेत्
शास्ता च शङ्करसुत ततो हस्त्यश्ववाहनः ८९
नीलकण्ठः कपर्दी च कालोग्रो रुद्रसंभवः
ॐन्नमोऽन्तैश्च ताराद्यैरेषा नामभिरर्चयेत् ९०
ता हूं भूतनाथाय विद्महेन्ते भवेति च
पुत्राय धीमही वदे तन्न शास्ता प्रचोदयात् ९१
अमुना तद्बलिं दत्वा पार्षदेभ्यो बलिं हरेत्
दुर्गापीठं ततो गत्वा तदुपस्थानमाचरेत् ९२
रक्षायै सुरसत्यानां प्राणहन्त्रे सुरस्द्विषाम्
शङ्खाद्यङ्कुशहस्तायै सदा दुर्गे नमोऽस्तु ते ९३
सतारभुवनाधीशी दुंशब्दप्रमुखानि च
सचतुर्थी नमोन्तेन दुर्गानाम समर्चयेत् ९४
कार्त्यायिनां चतुर्थ्योक्त्वा विदाकन्यशब्दकम्

कुमारीति वदेत्पश्चात्तन्नो दुर्गिः प्रचोदयात् ६५
अमुना तद्बलिं दद्यात्पार्षादिभ्यः स्वमन्त्रतः
शक्तिहस्ताय वह्नीन्द्रवाहनाय यशस्विने ६६
शितिकण्ठकुमाराय नमस्तेऽस्तु षडानन
इत्युपस्थाय सेनानि गन्धाद्यैरथ पूजयेत् ७०
तारं च तत्पदान्ते तु भुवेस्वाहेत्युदीर्य च
तारादिन्दे नमान्तं च कार्तिकेयं पुनर्वदेत् ७१
अयं मनुः समाख्यातः षण्मुखं च समर्चने
स नवपूर्वमादाय विद्महेति पदं वदेत् ७२
महासेनाय धीमहि तन्न स्कन्द प्रचोदयात्
बलिं दत्वामुना पश्चात्पार्षदेभ्यो बलिं हरेत् ७३
यक्षगुह्यकसेव्याय पौलस्त्याय महौजसे
ईशप्रियाय शान्ताय नमस्तेऽस्तु धनेश्वर ७४
कुबेरमित्युपस्थाय स्वनामपदमन्त्रतः
संपूज्य तद्बलिं दद्यात्पार्षदेभ्यस्ततः परम् ७५
मुण्डिनीमथ संसाद्य तदुपस्थानमाचरेत्
वरदाभयहस्तायै तर्जयन्त्यै जगत्सदा ७६
दुर्गा नैर्माल्य धारिण्यै नित्यं मुण्डिनि ते नमः
सतारस्फुरयुग्मान्ते संबुद्ध्या मुण्डिनी तथा ७७
हुं फट् स्वाहेति संप्राक्त्वा मुण्डिन्यै न्मतिमुच्चरेत्
अनेन मनुना मन्त्री सादरं पूजयेदिमाम् ७८
प्रवदेदजभूतायै विद्महेन्ते यशस्विनी
धीमहीति वदेत्पश्चात्तन्नो मुण्डिप्रचोदयात् ७९
दत्वामुना बलिं तस्यै पार्षदिभ्यस्ततः परम्
नमस्ते ह्लादिनि सदा सर्वाह्लादविशारदे ८०
नमस्ते मोदिनि सदा सर्वचित्तप्रदोदिनी

विजिताखिलदैत्येन्द्रे विजयत्यै नमोऽस्तु ते ८१
अतिकोमलचार्वङ्गी कात्यायिनी नमोऽस्तु ते
गोपुरान्तर्बलिद्वारि पालिकाश्च क्रमाद्गुरुः ८२
इत्युपस्थाय संपूज्य नाममन्त्रैर्निजैर्निजैः
ताभ्य तत्पार्षदिभ्यश्च बलिं दत्वा व्रजेद्बहिः ८३
यास्समस्तं जगद्व्याप्य तिष्ठन्त्यो बलिकाङ्क्षकाः
दुर्गायाः पार्षदः सर्वाः गृह्णन्तु बलिमुत्तमम् ८४
समुच्चरेद्दिशि दिशि सकृत् सकृदिमं मनुम्
तत्तत्पीठं शनैर्गच्छेत्काल्यादीनां क्रमाद्गुरुः ८५
काली कराली विरजा मन्दरा विन्ध्यवासिनी
सुप्रभा सिंहवक्त्री स्यादष्टमी दैत्यमर्दिनी ८६
एताः संपूज्य गन्धाद्यैः स्वस्वमन्त्रेण देशिकः
ताभ्यस्तत्पार्षदिभ्यश्च ततः प्रविकिरेद्बलिम् ८७
अष्टावष्टौ च दुर्गायाः सुदुर्गादिगणाः पृथक्
दशकोटिगणाधीशा दिशं प्रति व्यवस्थिताः ८८
ताभ्यस्तासां पीठपार्श्वैर्यष्ट्वा दद्याद्बलिं तदा
सुदुर्गा च विदुर्गा च निदुर्गा च विलोचना ८९
भद्रा चैव सुभद्रा च अदुर्गा दुर्गविक्रमा
अष्टौ दुर्गागणा ह्येताः पूर्वस्यां दिशि संस्थिताः ९०
अकन्या च सुकन्या च रविकन्या सुकन्यका
यक्षकन्या मारकन्या ह्युरकन्या रविप्रभा ९१
अष्टौ दुर्गा गणाह्येता आग्नेयां दिशि संस्थिताः
वामा सुवामा भा वामा वामा वाज्माद्या वामलोचना ९२
वामोद्भवा वामसमा वाममूर्तिधराः पुनः
अष्टौ दुर्गा गणाह्येता नैर्ऋत्यां दिशि संस्थिताः ९३
देवी सुदेवी या देवी सामदेवी सुदुर्दरी

विदेवी रविदेवी च देवी देवी तथाष्टमा ९४
अष्टौ दुर्गागणा ह्येता वारुण्यां दिशि संस्थिताः
दण्डा च विसृदण्डा च सुदण्डा दण्डविक्रमा ९५
शतदण्डा महादण्डा दुर्दण्डा दुरिरक्रमा
अष्टौ दुर्गागणाह्येता वायव्यां दिशि संस्थिताः ९६
अगौरी च विगौरी च सुगौरी गौरिविक्रमा
विगौरी चैवन्निगौरी सगौरी गौरिवल्लभा ९७
अष्टौ दुर्गागणाह्येता उत्तस्यां दिशि स्थिताः
जया च विजया चैव अजया च जयान्विता ९८
सुजया च जया कान्ता जयन्ता जयविक्रमा
अष्टौ दुर्गागणाह्येता ईशान्यां दिशि संस्थिताः ९९
सुकाली चैव काली च विकाली करकालिका
दुर्गाली कार्तिका काली निष्काली चाष्टमा स्मृताः १००
अष्टौ दुर्गागणाह्येता ऊर्ध्वायां दिशि संस्थिताः
सुमेदी मेदिनी चैव वसुधा च वसुन्धरा १०१
भूमिरुर्वीधरा चैव भूतनाथ तथाष्टमा
अष्टौ दुर्गागणा ह्येता अधस्तान्दिशि संस्थिताः १०२
आसां वृत्याः शतं तासां सहस्रं च पुनस्तथा
अयुतं च पुनस्तासां लक्षसः लोटिशः पुनः १०३
येतासामपि नामानि विवेकुं वक्तुमेव वा
देव्या विहात्री लोकेऽपि कसमर्थो भवेत्पुमान् १०४
ततो वाद्यैरपि महा बलिपीठं व्रजेद्गुरुः
तत्र ध्यात्वाथ संपूज्य ब्रह्मघोषादिकाः क्रमात् १०५
पूर्वाशादि ततो दिक्षु मध्यतः स्वस्वमन्त्रकैः
ताभ्यस्तु पार्श्वदिभ्यश्च बलिं दद्याद्यथाविधि १०६
ब्रह्मघोषी सुघोषी च यथेष्टी सुखरागिणी

सुमुखी सुप्रभा भूयः प्रमोदिन्यात्मनी तथा १०७
ब्राह्मी चेति समुद्दिष्टा ब्रह्मघोषादि देवताः
असंख्या पदतो ब्रूयात्ततः कोटिगणाधिपाः १०८
भवन्तु सहिताः सर्वे त्वेभ्यस्ताभ्यो नमोद्विठम्
जनेन मनुना चैव परितोऽस्य बलिं हरेत् १०९
अत्रैव तत्तदिवसे देवताभ्यो यथाविधि
स्वस्वमन्त्रबलिद्रव्यैः बलिं दद्याद्द्विजोत्तमः ११०
गणेशी च समुद्दिष्टा प्रथमेऽहनि देवता
भूतिका च तृतीयेऽह्नि ऋषिपत्नी तृतीयके १११
इन्द्राणी तु चतुर्थेऽह्नि ब्रह्माणी पञ्चमेऽह्नै
षष्ठेऽह्निदेवता लक्ष्मीश्शर्वाणी सप्तमेऽहनि ११२
अष्टमे चेश्वरी प्रोक्तान्नवमेऽहनि पार्वति
इत्येता देवता प्रोक्ता दिवसानां यथाक्रमम् ११३
शुद्धान्नं घृतसंयुक्तं लड्डुकापूपसंयुतम्
प्रथमेऽहनि दातव्यं गणेशिप्रीतये गुरुः ११४
सफलं रजनी चूर्णं सघृतं दधिसक्तु च
द्वितीयेऽहनि दातव्यं भूतिकाप्रितिसिद्धये ११५
पद्मपुष्पं कुशाभं च शाल्यान्नं घृतमिश्रितम्
तृतीयें हनि दातव्यं ऋषिपत्नी प्रियाय च ११६
इन्द्रवल्ली हरिद्राढ्यं प्रियङ्गुघृतसंयुतम्
चतुर्थेऽहनि दातव्यं इन्द्राणी प्रीति हेतवे ११७
पायसं रजनीचूर्णं पद्मपुष्पं + लाञ्छनम्
पञ्चमेऽहनि दातव्यं ब्रह्माणि प्रीतिहेतवे ११८
गुलान्नमाज्यसंयुक्तं बृहतीफलसंयुतम्
षष्ठेऽहनि प्रदातव्यं वैष्णवी प्रीतिसिद्धये ११९
कृसरान्नं घृतोपेतं नालिकेरफलान्वितम्

सप्तमेऽहनि दातव्यं शर्वाणीप्रीतिसिद्धये १२०
वेणवन्नं दधिसंयुक्तं कदलीफलसंयुतम्
अष्टमेऽहनि दातव्यं ईश्वरी प्रीतिसिद्धये १२१
गुडान्नं दधिसंयुक्तं नानाभक्षसमन्वितम्
नवमेऽहनि दातव्यं पार्वतीप्रीतिसिद्धये १२२
इत्येवं वासरे शीर्णां बलिद्रव्यगणोदितः
ततो ध्वजं समासाद्य पूजये ध्वजदेवताः १२३
माधवी चैव पूर्वस्यामाग्नेय्यां मधुनी दिशि
या देवी दक्षिणस्यां च महारौद्री तु नैर्ऋते १२४
पश्चिमे योगमुद्रा तु वायव्यां सुमुखी तथा
वैष्णवी चोत्तरे भागे चैश्वरे च सुनन्दिनी १२५
इत्येताः संप्रदिष्टाश्च क्रमेण ध्वजदेवताः
ताभ्या दद्याद्बलिं मन्त्री स्वस्वमन्त्रे विशेषतः १२६
तत क्षेत्रैशमागत्य तदुपस्थानमाचरेत्
सर्वदा क्षेत्रवासानां सर्वेषां प्राणिनां त्वया १२७
पाल्यन्ते च यतस्तस्मात् क्षेत्रपाल नमोऽस्तु ते
इत्युपस्थाय संपूज्य तस्मै तन्मनुना गुरुः १२८
पार्षदेभ्यो बलिं दत्वा निर्गच्छेद्बहिरादरात्
भूतप्रेतपिशाचानां यक्षवेतालराक्षसाः १२९
अतिक्रूरग्रहादीनां सर्वेषां तुष्टिहेतवे
बहुतण्डुलपक्वान्नैः षुष्टिना मुनिना गुरुः १३०
विकिरेद्ग्रामवीथ्यादौ बलिमन्त्रेण चामुना
ये भूताः क्रूरकर्माणः पिशाचा राक्षसेश्वराः १३१
दुष्टप्रेतगृहायेष्टहीना हीनाश्च ये गणाः
वेताला अल्पसत्वाश्च गृह्णन्तु बलिमुत्तमम् १३२
मूलालयं ततो गच्छेद्वाद्यघोषैर्महाजनैः

एवं नवाहं कर्तव्यं त्रिसन्ध्यां बलिदानकम् १३३
इति श्रीविजयागमे बलिदानविधिः षट्त्रिंशत्पटलः

अतः परं प्रवक्ष्यामि उत्सवं सर्वकामदम्
मध्याह्ने चैव रात्रौ तु बलिदानावसानके १
कर्तव्यं तु यथा न्याय्यं महाविभवविस्तरैः
प्रथमं प्रार्थनं यानगमनं तु द्वितीयकम् २
द्वितीयं प्रोक्तमास्थानमण्टपाभिनिवेशनम्
चतुर्थमर्चनं प्रोक्तं निवेद्यं पञ्चमं भवेत् ३
भक्तानां परिचाराणां षष्ठं स्यात्परितोषणम्
इत्येवं षट्सु मुक्ताणि कर्माण्यत्रोत्सवे विधौ ४
देव्यान्तिकं समासाद्य सपुष्पाञ्जलिसंपुटः
देवीं विज्ञापयेद्भक्त्या यजमानान्वितो गुरुः ५
उत्सवार्थं प्रकर्तव्या यात्र भर्त्रा सह त्वया
अनुज्ञां कुरु कल्याणि कृपया मम शाश्वते ६
इति विज्ञाप्य तन्मूर्तौ पुष्पाणि विकिरेत्ततः
सर्वाभरण सन्दीप्ते देवदेव्यौ द्विजोत्तमः ७
वेदमङ्गलनिर्घोषैः जयशब्दैः समुच्छ्रितैः
विविधैर्वाद्यनिर्घोषैः याने चारौ भवेच्छुभौ ८
प्रथमे शिबिकायानं द्वितीये शिखियानकम्
डोलयानं तृतीये च चतुर्थे पुष्पमण्टपम् ९
पञ्चमे वृषयानं स्याद्गजयानं तु षष्ठके
सप्तमे सिंहयानं स्यादष्टमे रथयानकम् १०
नवमे दिवसे प्रोक्तामश्वयानं मनोरमम्
इत्युक्तानि च यानानि दिवसानां यथाक्रमम् ११
हर्म्यप्रदक्षिणं नीत्वा नाना भक्तैश्च सेवकैः

प्रणयेद्भूषितायां च पुरवीथ्यां शनैः शनैः १२
गीतवादित्रनिर्घोषान् नर्तनं गाननिस्वनान्
अन्यांश्च नृपभोगांश्च कुर्यं रत्यादृतास्तदा १३
ग्रामान्तं नगरान्तं वा परिभ्राम्य जनैरिति
आस्थानमण्टपं यायात्संस्कृतं समलङ्कृतम् १४
देवदेव्यौ निवेश्यत्र विस्तरे मणिचित्रिते
संपूज्य परया भक्त्या सुगन्धकुसुमादिभिः १५
हृद्यं स्वादु निवेद्यं च ताभ्यां दद्यान्मुद्रा गुरुः
भक्तानां परिचाराणां गन्धमाल्यादिकैस्ततः १६
तोषयेद्यजमानस्तु प्रियवाक्यैर्मुदावहैः
आचार्यादिक ऋत्विग्भ्यो भक्तेभ्यस्तदनन्तरम् १७
दातव्यं तन्निवेद्यं च सर्वेभ्योऽपि यथोचितम्
नृत्तगीतैश्च शङ्खाद्यैः वाद्यैर्नानाविधैरपि १८
देवदेव्यौ च संतोष्य पुरेवालयमानयेत्
तत्रास्फेटनपाषाणे दक्षिणस्थे जनैर्मुदा १९
देवानां हर्षसिद्ध्यर्थं नालिकेरफलान्यपि
संस्फेटय यजमानाद्य धानसव्यक्रमात्ततः २०
गर्भालयं समानीय स्वासने संनिवेशयेत्
दत्वार्घ्याचमनं ताभ्यां किञ्चिन्मूलाणुनार्चयेत् २१
प्रणम्य प्राञ्जलिर्भूत्वा क्षमस्वेति वदेत्ततः
परिवेषक्रमं कुर्यात् क्रमेण तदनन्तरम् २२
तद्विधानं प्रवक्ष्यामि सर्वाघक्षयकारकम्
प्रथमं स्थानक्लृप्तिः स्याद् द्वितीयं नर्तनं भवेत् २३
समर्चनं तृतीयं स्यान्नीराजनमतः परम्
निर्माल्यादान तस्योर्ध्वं षष्ठं स्याद्वाद्यघोषणम् २४
कर्माणि षट् समुक्तानि परिवेषविधाविह

आलये मराटपे वापि तत्र सिंहासनोपरि २५
शिवमूर्तियुताञ्चैव तद्विहीनामथापि वा
देवीं निवेश्य राजन्य परिच्छदसमन्वितम् २६
आश्रये दक्षमाचार्यो भूपतिस्तस्य चोत्तरम्
तिष्ठन्तु पुरतश्चैव शङ्खभेर्यादिवाद्यकाः २७
तेषां च दक्षिणे भागे नर्तकाश्चैव मर्दकाः
तद्वामभागे तिष्ठन्तु गायका अपि वंशकाः २८
पार्श्वयोरुभयोश्चैव गणिका निवसन्तु वै
देव्याश्च परितो भक्ता वेदशास्त्रविदो बुधाः २९
ततः पश्चात् समुत्सृज्य द्विद्विदराडान्तरालकम्
शिष्याश्च वृद्धबालाश्च निवसन्तु स्त्रियस्तथा ३०
अन्ये च तत्र तत्रैव तद्वाह्य निवसन्तु वै
देव्याः पुरसताद्भवत शास्त्रोक्तविधिना ततः ३१
नर्तनं तु प्रकर्तव्यं चारुगानस्वरान्वितम्
ततस्तामभिसंपूज्य पाद्यादीन् परिकल्प्य च ३२
सर्वेषामपि लोकानां नेत्रोत्तिष्ठनिवृत्तये
नीराजनं प्रकर्तव्यं धूपदानावसानके ३३
सौवर्णै राजतैर्वापि ताम्रै कांस्यैरथापि वा
पात्राणयुक्तानि तेषांश्च विस्तारो विंशदङ्गुलम् ३४
अग्निभागैकभागेन कुर्यान्मध्ये च कर्णिकाम्
तद्वाणैकांश उत्सेधः कर्णिकायां प्रमाणतः ३५
पट्टिका परितः कार्यात्सवयुग्मेन विस्तृतिः
उन्नतं तत्समानं स्यात्परितोऽष्टदलानि च ३६
कर्णिकार्धप्रमाणेन कोष्ठनामाष्टके समम्
ओष्टयेकाङ्गुलस्यापि विस्तारः कर्णिकोन्नते ३७
समानं पूर्णचन्द्राभा दीपधारांश्च कुम्भवत्

उन्नतं च चतुर्मात्रैर्विसृतं चाङ्गुलद्वयात् ३८
तद्रन्ध्रं द्व्यङ्गुलं कुर्यात् कर्णिकामध्यसंस्थिता
दीपधारांश्च पात्रेषु स्थापयेत्तद्रथाष्टके ३९
मध्यस्थमेकमित्युक्तं नवदीपं करोत्तमः
पञ्चात्मके चतुर्दिक्षु मध्ये त्वेकमिति त्रिधा ४०
अङ्गुलत्रयमानेन पादं कुर्यादधस्ततः
दीपधारेषु सर्वेषु तैलैर्वा शोघृतैरपि ४१
स्वेच इत्वा प्रविन्यस्येद्वर्तिः सव्यक्रमेण वै
एकत्र तिलमन्यत्र सर्षपं लवणं तथा ४२
कार्पासबीजमन्यत्र गोमयं पिष्टमेव वा
विन्यस्य सव्यक्रमतो दीपं दीपेन योजयेत् ४३
पात्राणि तानि योषिद्भिरथवा परिचारकैः
देव्याग्रे स्थापयित्वाथ देवता अभियोजयेत् ४४
पात्राणां देवता माया विष्णुत्सेनाधिदेवता
वर्तीना देवता ब्रह्मा दीपानां देवता शिवः ४५
पाद्यमाचमनं दत्वा हृन्मन्त्रेण समर्चयेत्
एकवारं त्रिवारं वा पञ्चवारमतः परम् ४६
देव्याश्च मस्तके विद्वान् परिभ्राम्य शिरोऽणुना
इच्छाशक्त्यादिभिर्मन्त्रैः दीपपात्राणि तान्यथा ४७
दद्याच्छिष्यकरे सोऽपि यजमानपुरस्सरम्
एतनिर्माल्य दीपांश्च भक्तेभ्यो दापयेत् क्रमात् ४८
अङ्गं तपन्ति नेर्माल्य दीपजालार्चिषा च ये
ते नराः प्रविमुच्यन्ते ब्रह्महत्यादि पातकैः ४९
गोपुरस्यान्तिके वृक्षे मूले वान्यत्र वा ततः
आहृत्य तानि दीपाढ्यपात्राणि च विनिक्षिपेत् ५०
सितच्छत्रं च विमलं दर्पणं वीजनं तथा

सितचामरयुग्मं च शिवायै दापयेत्ततः ५१
भेरीं शङ्खमृदङ्गाख्यवीणाकाहलपूर्वकम्
वाद्या नानाविधांश्चैव घोषयेयुरनेकधा ५२
गणिका नर्तनं कुर्युः मृदा गानस्वरान्वितः
वेदमङ्गलनिर्घोषान् स्तोत्रपाठान् जयध्वनीन् ५३
कार्यं यत्राद्भुतास्तत्र देवीसन्तोषहेतवे ५४
इति श्रीविजयागमे उत्सवपरिवेषविधिः सप्तत्रिंशत्पटलः

अतः परं प्रवक्ष्यामि रथोत्सवविधिं क्रमात्
सर्वदेवप्रियकरं सर्वकामफलप्रदम् १
पुण्याहवाचनं पूर्वं द्वितीयं कलशार्चनम्
तृतीयं चाग्निहवनं संप्रोक्षणमतः परम् २
रथदेवार्चनं चोर्ध्वं षष्ठं राभ्योदनार्पणम्
ग्रामे प्रदक्षिणं चैव सप्तमं परिकीर्तितम् ३
अष्टमं तु रथारोहं नवमं यजनं भवेत्
दशमं स्तोत्रपाठं स्यात्तदूर्ध्वं गमनक्रमम् ४
इत्येकादश संप्रोक्ता रथोत्सवविधिः क्रियाः
पुरेव विधिभिः कर्ता शिल्पिभिः कुशलैरपि ५
कारयेद्दारुभिः सारैः प्रयत्नेन दृढं रथम्
सर्वलक्षणसंपन्नं फलपल्लवशोभितम् ६
विचित्रचित्रैर्विविधैश्चित्रितं च समन्ततः
अलङ्कृतं पताकाभिर्वितानै क्षौमवाससाम् ७
प्रोज्वलं स्वर्णरत्नाद्यैर्मालाजालैः सुशोभितम्
एवं स्थिते रथे तस्मिन् संप्रोक्षणविधिं क्रियात् ८
आचार्यस्तु शुचिर्भूत्वा कृत्वा चैवाह्निकक्रियाम्
देव्याश्चैव यथान्याय्यं कुर्यान्नित्यार्चनादिकम् ९

संपूज्यादौ गणेशानं भक्षाद्यैस्तोषयेत्ततः
पुण्याहवाचनं कुर्यान्मूर्तिपैश्च द्विजोत्तमैः १०
मण्टपं कल्पितं चारु दक्षभागे रथस्य च
स्तम्भैः षोडशभिर्युक्तं चतुर्द्वारोपशोभितम् ११
वितानतोरणैर्युक्तं ध्वजैश्चैवाष्टमङ्गलः
तन्मध्ये वेदिकायुक्तं द्विद्विहस्तप्रमाणतः १२
तावत् समुच्छ्र्योपेतं दर्पणोदरसन्निभम्
तत्र प्रागुत्तराग्रं च न्यसेत्सूत्रचतुष्टयम् १३
कोष्ठानि नव जायन्ते पद्मं वा स्वस्तिकं तु वा
तेषु संरछयेन्मन्त्री श्वेतपीतादि चूर्णकैः १४
ततः शाली तण्डुलानि दर्भकूर्चानि विन्यसेत्
यष्ट्वा पीठं च विधिवत् कलशान्नव विन्यसेत् १५
सेवेर्न्नप्रतिमां मध्ये पञ्चनिष्कप्रमाणतः
अन्येषु निष्कमात्रेण कलशेषु विनिक्षिपेत् १६
संपूर्य निर्मलाम्भोभिः कलावाहनमाचरेत्
सिंहविद्यैश्वरांश्चैव मध्यादि परितोऽर्चयेत् १७
पिदाय पल्लवैर्न्यस्येन्नालिकेरफलानि च
आच्छाद्य नव वासोभिरुत्कूर्चानि प्रविन्यसेत् १८
रथाङ्गाश्रितदेवानां पृथक्कुम्भान् प्रविन्यसेत्
आवाह्य तत्र देवांश्च नैवेद्यान्तं समर्चयेत् १९
कुण्डे वा स्थण्डिले वापि ततो मन्त्रविदां वरः
स्वगृह्योक्तेन मार्गेण जनयेज्जातवेदसम् २०
सिंहविद्येशमन्त्रैश्च स्वाहान्तै प्रणवादिकैः
साष्टाधिकं तु शतकं समिदाज्यचरून् क्रमात् २१
एलांश्च सर्षपांश्चैव जीरकान् श्वेततण्डुलान्
क्षीराज्यमाक्षिकान्यग्नौ स्त्रुवेणादाय होमयेत् २२

ततो रथस्य देवानां तत्तन्मन्त्रेण देशिकः
अष्टाष्टावहुतिंश्चैव द्रव्यैरेभिर्हुनेत्क्रमात् २३
संपातं संगृहीत्वा तु हुनेत्पूर्णाहुतिं ततः
तद्भस्म न्यस्य कुम्भेषु वह्निकर्म विवर्जयेत् २४
संपातसर्पिषा तेन वर्मणा लेपयेद्रथम्
अथ कुम्भान् समुद्धृत्य वाहयित्वा द्विजोत्तमैः २५
रथस्य मध्ये परितो तज्जलैरभिषेचयेत्
रथस्य देवमूर्तिश्च तत्तत्कुम्भाम्बुभिः क्रमात् २६
सेचयेद्वेदमन्त्रैश्च सूक्तैर्नानाविधैरपि
उदुत्तुमे तृचावेष्ट्वा स्यन्दनं दर्भमालया २७
अर्चयेदधिदेवांश्च रथस्यावयवादिषु
मयाशक्तिं यजेन्मन्त्री प्रथमं चक्रदण्डयोः २८
इच्छादिशक्तित्रितयं महादण्डत्रयोर्चयेत्
चक्रेषु पूजयेत् पश्चाद्दिवाकरनिशाकरौ २९
रन्ध्रेषु पूजयेद्वायुं कीलेषु च हुताशनम्
रथस्य मध्ये परितो सिंहविद्येश्वरान् यजेत् ३०
सुदुर्गादिगणांश्चैव पट्टिकासु च पूजयेत्
रूपिलायां महाविष्णुं रथप्रासादके ततः ३१
ब्रह्माणं च महेशानं तदूर्ध्वे परिपूजयेत्
फलकेषु यजेद्यक्षान्ननन्तादिश्च रज्जुषु ३२
गुह्यकान् ग्रन्थिषु यजेत् किन्नरान् गात्रसन्धिषु
स्तम्भेषु कल्पवृक्षांश्च यजेद्रुद्रांश्च वीथिषु ३३
वलयेषु क्षमादींश्च यजेत् सन्धिषु मातरः
सिंहासने यजेन्मन्त्री हिमवन्तं नगोत्तमम् ३४
ततो विद्याधरांश्चैव तुलासु परिपूजयेत्
पुत्तलीष्वप्सरोवृन्दं धर्मं गात्रान्तरे यजेत् ३५

द्वारेषु च चतुर्वेदान् धर्मादीन् तोरणेषु च
ध्वजेष्विन्द्रादिदेवांश्च चामरेषु धनेश्वरम्  ३६
वितानेषु यजेद्गङ्गां मङ्गलेषु वसून् यजेत्
गन्धर्वां श्च पताकासु यजेच्छत्रेषु चाश्विनौ  ३७
दर्पणेषु यजेच्चन्द्रं विजयेष्वनलं यजेत्
वासुखिं दर्भमालायां मेरुं चक्रवशेषु च  ३८
भार्गवीमिक्षुदण्डेषु वृन्ताकेषु वसुन्धरा
रम्भास्तम्भेषु चामुण्डां तत्फलेषु शशिं यजेत्  ३९
जाह्नवीं नालिकेरेषु नारङ्गेषु सरस्वतीम्
डाडिमेषु च गायत्रीं चण्डीं जम्बूफलेषु च  ४०
पनसानां फले द्विष्टं कपित्थेषु विहायकम्
क्रमुकेषु यजेत् स्कन्दं कामं चूतफलेषु च  ४१
जम्बीरेषु च सावित्रीं रतिं किसलयेषु च
ताराश्च पुष्पमालासु रत्नेषु च नवग्रहान्  ४२
एवं संपूजयित्वा तु स्वस्वनाम पदा जना
रथस्य परितः पश्चाद्भूतानां हर्षसिद्धये  ४३
कूश्माण्डशकलोपेतं नानाभक्षसमन्वितम्
रक्तपुष्पप्रदीपाढ्यं रजनीचूर्णरञ्जितम्  ४४
नानाफलाज्यसंयुक्तं राश्यन्नं च निधापयेत्
ततश्चैवोत्तमे याने शिवमूर्तिसमन्विताम्  ४५
देवीमूर्तिं  च संस्थाप्य नानाजनगणैस्सह
नानाच्छत्रपताकाद्यैर्धूपदीपादिकैस्तथा  ४६
शङ्खदुन्दुभिवीणाद्यैर्वाद्यघोषैर्विशेषतः
प्रकुर्याद्बलिदानं च मन्त्रैरेभिश्च देशिकः  ४७
ग्रामे प्रदक्षिणं कुर्यात्सर्वेषां तुष्टिहेतवे
चतुष्पथस्था ये भूता ये भूता मार्गगामिनः  ४८

ते सर्वेऽपि मया दत्तं बलिं गृह्णन्तु वै मुदा
त्रिपथस्थाश्च ये भूता मनुष्यक्लेशकारिणः ४९
देव्याज्ञया च गृह्णन्तु मद्दत्तं बलिमुत्तमम्
विषवृक्षस्थिता ये च ये क्रूरा भूतनायकाः ५०
ते सर्वेऽपि मया दत्तं बलिं गृह्णन्तु वै मुदा
चैत्यवृक्षस्थिता भूता सच्छायां ये समाश्रिताः ५१
कृतभूताश्च ये सर्वे गृह्णन्तु बलिमुत्तमम्
ये कण्टकाश्रिता भूता ये भूताः क्रूरकण्टकाः ५२
ते सर्वेऽपि मया दत्तं गृह्णन्तु बलिमुत्तमम्
क्षीरवृक्षं समाश्रित्य ये ये भूताश्च संस्थिताः ५३
ते सर्वेऽपि मया दत्तं गृह्णन्तु बलिमुत्तमम्
ये नागराजा ये भूताः क्रूरकर्मात्मकाश्च ये ५४
ते सर्वेऽत्र समागत्या गृह्णन्तु बलिमादरात्
शून्यगेहाश्रिता भूताः ये चाण्डं कूपमाश्रिताः ५५
शून्यारामास्थिता ये च ते गृह्णन्तु बलिं मुदा
रथान्तिकं ततो गत्वा तत्समन्ताद्बलिं हरेत् ५६
सुमुहूर्तसुलग्ने तु द्विजोत्तममुखोद्गतैः
वेदमङ्गलनिर्घोषैः शङ्खदुन्दुभिनिस्वनैः ५७
रथमारोहयेद्देवीं शिवेन सहितां ततः
तत्र सिंहासने मन्त्री देवदेव्यौ निवेशयेत् ५८
अङ्गाद्यावरणैः पश्चात् संपूज्य कुसुमादिभिः
दत्वा स्वादु निवेद्यं च ताभ्यां ताम्बूलकं पुनः ५९
अरयेदुपचारांश्च भक्तिभावेन देशिकः
रथान्तिकं समासाद्य नालिकेरफलासु च ६०
तस्य नेमिषु चास्फोट्य देवताहर्षसिद्धये
त्रिवारं पञ्चवारं वा सप्तवारमथापि वा ६१

रथप्रदक्षिणं कृत्वा नमस्कारान् तथैव च
आदायाक्षतपुष्पाणि स्वर्णरत्नानि चाञ्जलौ ६२
रथारूढां महादेवीं बल्लभेन समन्विताम्
देशिकेन्द्रेण सहितः पठेत् स्तोत्रमिदं नृपः ६३
नमस्ते जदाधारे नमस्ते जगदाम्बिके
नमस्तेऽस्तुषाराद्रि शिखाराद्यद्द्रथाश्रिते ६४
नमश्शङ्करवामाङ्के संस्थिते वरदे नमः
नमस्ते गुहविघ्नेशि लसत्पार्श्वद्वये नमः ६५
नमस्तेस्त्वग्रतो व्यास वाल्मीकाद्यैश्च सेविते
नमस्ते परितो देव्यै ब्रह्मेन्द्राद्यैश्च संस्तुते ६६
नमो जगती वाग्लक्ष्मीः शैलकन्येति भेदिते
नमस्तेऽस्तु जत्सृष्टि स्थिति संहारकारिणे ६७
नमस्सूर्याग्निचन्द्राद्यान्नयनत्रयशोभिते
नमस्ते मकुटाग्रेन्दुलेखाद्भासितमस्तके ६८
नमस्तेऽनेकमार्ताण्डप्रभाद्योतितविग्रहे
नमस्सकलकल्याणि धूम्रलोचननाशिनी ६९
नमः सुम्भ निसुम्भघ्नी रक्तबीजहरे नमः
नमस्तेऽस्तु जगद्वन्द्ये नमो भक्तभयापहे ७०
नमो निर्मलयोगीन्द्र हृदयाम्बुजवासिनी
नमस्तेऽस्तु सुरेन्द्रादि देवार्चितपदाम्बुजे ७१
नमस्तेऽनादिनिधने नमस्ते चिन्मये मले
नमस्ते धर्मकामार्थमोक्षदे चण्डिके नमः ७२
नमस्ते सर्वजन्तूनां चैतन्यात्मकिने नमः
नमस्तेऽस्तु महामाये शरणागतवत्सले ७३
रक्षमां कृपया देवि तद्भक्तं च तदाश्रयम्
मद्भृत्यपरिवारांश्च ग्रामराष्ट्रपुराणि च ७४

सेनाङ्गानि च सर्वाणि रक्षये कृपयाम्बिके
इह देवि सुपुत्रांश्च राज्यैश्वर्यधनानि च ७५
भोगांश्च विपुलान् मह्यं परत्र च परां गतिम्
इति संप्रार्थ्य तां देवीं करसंपुटगानि च ७६
पुष्पाक्षतानि रत्नानि स्वर्णानि च रथोपरि
प्रविकीर्य ततो भक्त्या मन्दं मन्दं रथं नयेत् ७७
आचार्यमूर्तिपायुश्च वेदशास्त्रविदो बधाः
समारुह्य रथं तत्र निशिदन्तु यथोचितम् ७८
राजापि सूर्यसन्तापे शान्ततां गमिते सति
रथग्रन्थितरज्जूंश्च गृहीत्वा तु महाजनैः ७९
निम्नोन्नतविहीनायां संस्कृतां मार्जनादिकैः
ध्वजच्छत्रपताकाभिः पूर्णकुम्भैः फलादिकैः ८०
युक्तायां पुरवीथ्यां च महिलोपस्करैस्तथा
ग्रामान्तं नगरान्तं वा मृगुगत्या रथं नयेत् ८१
रथं प्रयाणकालेऽस्मिन् कलयेच्छिष्यसंचयैः
धूपदीपपताकाश्च नानाच्छत्रध्वजानपि ८२
चामरैस्तालवृन्तैश्च वीजयेयुश्च केचिना
विविधानेकवाद्यानि घोषयेयुश्च वाद्यकाः ८३
गणिकास्तु मनोरम्या नानागानस्वरान्विताः
नर्तनं पुरतः कुर्युः हावभावसमन्विताः ८४
जयमङ्गलशब्दांश्च वेदपाठान् तथैव च
स्वस्तिमङ्गलसूक्तानि स्तोत्राणि विविधानि च ८५
वदेयुः परितस्तस्य तस्मिन् काले द्विजोत्तमाः
ब्राह्मणा क्षत्रिया वैश्याः शूद्राश्चैव यथाक्रमम् ८६
निर्गच्छेयुस्तदग्रे च नानाभूषणभूषिताः
तत्पुरस्ताद्व्रजेयुश्च नानाशस्त्रासिधारिणः ८७

गच्छेयुरन्ये हस्त्यश्ववाहनोपरि संस्थिताः
रथपृष्ठे व्रजेयुश्च वृद्धबालपतिव्रताः ८८
गच्छेयुः पार्श्वयोर्भक्ता नानासेवपरायणाः
महात्म्यमपरे तस्याः पठन्ति साधु साधराः ८९
नानादेशागतजना उत्सवादर्शनोत्सुकाः
तत्प्रीतये व्रजेयुश्च परितो हृष्टमानसाः ९०
अनुव्रजन्ति ये मर्त्याः तदा देवीं पदे पदे
हयमेधसहस्राणि लभन्ते ते फलं ध्रुवम् ९१
रथप्रयाणकालेऽत्र सेवन्ते ये महेश्वरीम्
सर्वपापैर्विनिर्मुक्ताः देवीलोकं व्रजन्ति ते ९२
रथस्यां शिववामङ्गां पशुपक्षिमृगादिकाः
ते चापि दर्शनान्मुक्तिं प्राप्नुवन्ति न संशयः ९३
इत्येवं संपरिभ्राम्य नानाविभवविस्तरैः
जनकोलाहलैः पश्चात्प्रणयेदालयं प्रति ९४
अवतीर्य रथात्तस्मात्प्रविश्यास्थानमण्टपम्
देवदेव्यौ समभ्यर्च्य दत्वा नैवेद्यमुत्तमम् ९५
कारन्नृत्तगीतादि वाद्यघोषान्मुदा तदा
तन्निवेद्यं च ताम्बूलं आचार्यादिभ्य नं व च ९६
भक्तेभ्योऽपि च भृत्येभ्यो दत्वा सन्तोषयेत्ततः
प्रदक्षिणवशेनैव प्रणयेद्गर्भमन्दिरम् ९७
रात्रौ विशेषतः पूज्य विधिवद्देशिकोत्तमः
भक्षभोज्यादिसंयुक्तं निवेद्यं च समर्पयेत् ९८
वलिं दत्वा तु विधिवत् बल्यन्ते चोत्सवः क्रियाम्
कुर्यादीशानदिग्भागे रजोभिर्मण्डलान्तिवतः ९९
निधाय तत्र राश्यन्नं रजनीचूर्णरञ्जितम्
फलभक्षादिसंयुक्तं यष्टिदीपसमन्वितम् १००

भूततालनिनादेन तद्वाद्यध्वनिना समम्
उच्चरन् तन्मनुं चैव मन्त्री नियतमावः १०१
भूतेभ्योऽपि बलिं दत्वा गत्वा गर्भालयं गुरुः
कृतहस्ताञ्जलिर्भूत्वा क्षमस्वेति वदेत्ततः १०२
इति श्रीविजयागमे रथोत्सवविधिः अष्टत्रिंशत्पटलः

## चूर्णोत्सवविधिः

चूर्णोत्सवविधिं वक्ष्ये सर्वसौभाग्यदायकम्
प्रथमं स्थण्डिलं प्रोक्तं पुण्याहं स्याद्द्वितीयकम् १
समर्पणं तृतीयं स्यात्ततो घृतशिरोऽर्पणम्
पञ्चमं चूर्णकरणं षष्ठं तत्स्नपनं भवेत् २
ग्रामे प्रदक्षिणं चैव सप्तमं परिकीर्तितम्
एवमुक्तानि कर्माणि सप्त चूर्णोत्सवे विधौ ३
विधाय नैत्तिकं कर्म मन्त्री मन्त्रविदां वरः
आसनाद्यासनं पश्चान्नैर्माल्यं च विसर्जयेत् ४
कृत्वा पूजानिकं नित्यं शास्त्रदृष्टेन वर्त्मना
प्रसादस्याग्रदिग्भागे दक्षे वा वह्निकोणतः ५
मण्टपे संस्कृते चारु भूषिते साधनैर्युते
सशिवां सास्त्रराजं च देवी वादित्रनिस्वनैः ६
जयमङ्गलवाद्यैश्च तत्र सिंहासने न्यसेत्
परितः फलिताद्यैश्च मङ्गलाङ्कुरशोभितैः ७
अलङ्कृत्य ततः कुर्यात् स्थण्डिलद्वितयं बुधः
एकत्र विन्यसेदस्त्रं लूखलं मुसलं ततः ८
वस्त्रेणोलूखलं वेष्ट्य सहदेव्या सदूर्वया
हृन्मन्त्रेण च बध्नीयात् पुण्याहं वाचयेत्ततः ९
समभ्यर्च्य यथा न्याय्यं गन्धपुष्पादिभिः क्रमात्

ध्यात्वा चोलूखले शक्तिः ततो हृल्लेखया जयेत् १०
शिवं च मुसले ध्यात्वा प्रासादेन समर्चयेत्
उलूखलं च मुसलं तत्तन्मन्त्रेण देशिकः ११
घृतं शिरोर्पणं कुर्यात् ततो घृतसमन्वितैः
स्वर्णदूर्वाक्षतैर्युक्ताः शुद्धाः शुक +++ षिताः १२
हरिद्रा निक्षिपेत्तत्र मूलेनोलूखले गुरुः
तत्प्रमाणं विजानीयात्त्र्याढकं द्व्याढकं तु वा १३
एकाढकं वा कर्तव्यं तन्न्यूनं च न कारयेत्
भक्तेभ्योऽप्यथ सर्वेभ्यो मङ्गलार्थं विशेषतः १४
दूर्वाङ्कुरप्रदानं च विधातव्यं मनीषिणा
शङ्खदुन्दुभिनिर्घोषैर्वेदपाठैस्तथैव च १५
जयमङ्गलशब्दैश्च विप्राशीर्वचनैः सह
त्रिवारमस्त्रमन्त्रेण कुट्टये देशिकस्ततः १६
ततो भक्ताश्च गणिकाः चूर्णयेयुर्विशेषतः
तच्चूर्णं तु समादाय सुतैलेन विमिश्रयेत् १७
मूलमन्त्रमनुस्मृत्य पृथक्पात्रेषु भागशः
कल्पयित्वा वशिष्टं तु पेलागर्ते जले ततः १८
विलोड्य रञ्जयित्वा तु वरुणं तत्र पूजयेत्
देवदेव्यौ चास्त्रराजं तत्तच्चूर्णेन लेपयेत् १९
तदम्भसाथ संस्नाप्य नदचाद्यैरनेकशः
विमृज्य चीनपट्टेन मण्डयित्वाभिपूजयेत् २०
भक्ताश्च यजमानाद्या ये चान्ये मुख्यसेवकाः
गणिकाश्चैव तच्चूर्णं लेपयित्वा तदम्भसा २१
सेचयेयुर्मुदा तत्र परस्परमनेकधा
नानालीलविनोदांश्च कुर्युः प्रौढतया ततः २२
ये नरास्तेन चूर्णेन गात्रमालिप्य सादरम्

स्नापयन्ति भवेयुस्ते तापत्रयविवर्जिताः २३
ताम्बूलं दापयित्वा तु देवीमारोप्य यानके
पूर्वोक्तबलिमन्त्राणि प्रोच्चरन् देशिकोत्तमः २४
प्रकुर्याद्बलिदानं च मुदा गच्छेत्तदाग्रतः
बहुहृद्यैर्महावाद्यघोषाद्यैश्च महाजनैः २५
ग्रामप्रदक्षिणं कुर्यान्नानाविभवसंभ्रमैः
तीर्थस्नानं ततः कुर्यात्तद्विधानमिहोच्यते २६
तीर्थस्नानविधिः
तीर्थाभिगमनं पूर्वं द्वितीयं कलशार्चनम्
तीर्थसंग्रहणं चोर्ध्वं वह्निकार्यं चतुर्थकम् २७
पुण्याहं पञ्चमं प्रोक्तं कौतुकोत्सर्जनं परम्
स्नानं तु सप्तमं प्रोक्तं अष्टमं यजनं भवेत् २८
एवमष्टक्रिया प्रोक्ता तीर्थस्नानविधौ क्रमात्
समुद्रं निम्नगां वापि तटाकं वा मनोरमम् २९
गत्वा भक्तजनैस्सार्धं तत्तीरे नातिदूरतः
सचतुर्हविस्तारं चतुरश्रं विभूषितम् ३०
मण्टपं कलयित्वा शुचीकृत्य विविधानतः
विमानदेवतायैना तत्र पीठे निवेशयेत् ३१
स्थण्डिलं शालिभिः कृत्वा चक्रं तत्पुरतो न्यसेत्
पाद्यमाचमनं चार्घ्यं दद्यान्मन्त्रेण देशिकः ३२
स्वस्तिकानि समालिप्य मध्ये दिक्षु विदिक्षु वै
शालिभिस्तण्डुलैः पूर्य पीठं संपूजयेद्बुधः ३३
ससूत्रान् धूपितान् मन्त्री कलशान् नव विन्यसेत्
पञ्चत्रयेकनिष्केत्ताः प्रतिमास्तेषु निक्षिपेत् ३४
शुद्धतोयैश्च संपूर्य मध्यमे कलशे गुरुः
गङ्गादिसप्ततीर्थानि समावाह्य द्विजोत्तमः ३५

घटेष्वन्येषु विद्येशी वज्रादीन्यथवा यजेत्
फलवस्त्रादिभिर्भूष्य नैवेद्यान्तं समर्चयेत् ३६
वह्निकर्म ततः कुर्यात्स्वगृह्योक्तेन वर्त्मना
अग्निसंस्थाप्य संस्कृत्य प्रज्वाल्य परिपूज्य च ३७
जुहुयात्पञ्चदुर्गाभिः मूलमन्त्रेण वा पुनः
अब्बीजैर्वारुणैर्मन्त्रैः आपोहिष्ठादिकैस्ततः ३८
समिदाज्यचरूंश्चैव साष्टोत्तरशतं हुनेत्
तदर्धं वा तदर्धं वा हुनेदाहुतिमादरात् ३९
संपातमथ संपाद्य हुनेत् पूर्णाहुतिं गुरुः
तत्संपातं समादाय तीर्थतोये विनिक्षिपेत्
इमं म इति मन्त्रेण गङ्गाद्यास्संस्मरेन्नदीः ४०
देवदेव्यौ समाहृत्य चक्रं चाथ समाहितः
ब्राह्मणाशीर्वचोभिश्च नाभिदघ्नजले शुभे ४१
आद्येन दुर्गामन्त्रेण मज्जेद्भेर्यादिनिस्वनैः
द्वितीयेन ततो मज्जेत् तृतीयेन ततः परम् ४२
तत्र पीठे समारोप्य पुण्याहं वाचयेद्द्विजैः
इन्द्रादि सर्वदेवांश्च समाहूय गणानपि ४३
ग्रन्थिकं कौतुकं तत्र सूत्रमुत्सर्जयेत्ततः
मूर्तिपैर्यजमानाद्यैस्तद्भक्तैः परिचारकैः ४४
पुनस्सर्वजनैस्सार्धं तद्बिम्बौ चास्त्रराजकम्
शनैर्जलैस्समानीय सौम्यदिग्वदनो गुरुः ४५
तज्जलेऽथ चतुर्थेन मज्जेत्तन्मनुना त्रिशः
स्नानं कुर्वन्ति ये मर्त्याः सह देव्यात्र भक्तितः ४६
नाशयत्यखिलं पापं तमांसीव विभावसुः
तत्र स्नानाल्लभेत्पुत्रं वन्ध्यास्त्री सुगुणान्वितम् ४७
रोगी तु मुच्यते रोगाद्भूता तदुतसमावृतः

विद्यार्थी लभते विद्यां धनं च धनकाङ्क्षकः ४८
बहुना किमुदोक्तेन स्नानात्सर्वमवाप्नुयात्
पञ्चमेन च मन्त्रेण मूलमन्त्रेण वै पुनः ४९
ततः पुरुषसूक्तेन दुर्गासूक्तेन वै पुनः
अघमर्षणसूक्तेन पवमानेन मन्त्रवित् ५०
महावाद्यनिनादैश्च स्नपयेत्कलशोदकैः
ततः परं विशुद्धे द्वे परिधायाम्बरेऽमले ५१
आचार्ययजमानाद्याः मूर्तिपाश्च ततः परम्
अप आचम्य देवर्षीन् तर्पयित्वाथ वाग्यतः ५२
गन्धाद्यैस्तामलङ्कृत्य मूलेन परिपूजयेत्
याने तां च समारोप्य ततश्शङ्खादि निस्स्वनैः ५३
यायान्नानाजनैस्सार्धं त्वरमाणो गृहं प्रति
वाहनादवतार्यैतां कृत्वा धामप्रदक्षिणम् ५४
गर्भगेहं समासाद्य तत्र पीठे निवेशयेत्
पाद्याद्यैरुपचार्योऽथ भक्त्या संपूजयेद्गुरुः ५५
दत्वाथ दशदानानि विप्रेभ्यो यजमानकः
तोषयेद्वसुहैमाद्यैर्दीनान्धवधिराधिकान् ५६

इति श्रीविजयागमे चूर्णोत्सवतीर्थस्नानविधि
नवत्रिंशत्पटलः

## पूर्णाहुति

अतः परं प्रवक्ष्यामि पूर्णाहुतिविधिं क्रमात्
प्रथमयजनं प्रोक्तं स्विष्टकृद्धवनं परम् १
पूर्णाहुतीस्तृतीयं स्याच्चतुर्थं तु विसर्जनम्
यागेशाद्यर्चनं चोर्ध्वं षष्ठं तु स्नपनं भवेत् २
इत्येवं षट्क्रियाः प्रोक्ताः क्रमो पूर्णाहुतौ विधौ

यागशालां ततो गच्छेद्यजमानान्ततो गुरुः ३
सन्निधीकृत्य योग्यानि साधनानि च शिष्यकैः
प्राणायामत्रयं कृत्वा जिंहादि न्यासमाचरेत् ४
तत्कुण्डस्थममुं वह्निं देवा भित्वि समुज्वलम्
परिषिच्य परिस्तीर्य जिंहादि न्यस्य पूजयेत् ५
पुरोवदाज्यसंस्कृत्य हुनेद्व्याहृतिभिः क्रमात्
पञ्चभिश्चैव दुर्गाभिः मूलमन्त्रेण वै पुनः ६
हुत्वा च पूर्ववन्मन्त्र ततः स्विष्टकृतं हुनेत्
घृतपात्रं समानार्ध घृतमादाय स्रुक्स्रुवम् ७
तिष्ठन्नुद्धृत्य कण्ठान्तं मूलमन्त्रं समुच्चरन्
वेदवादित्रनिर्घोषैः सन्ततं घृतधारया ८
दत्वा पूर्णाहुतिं तस्मिन् क्षिप्त्वा पुष्पाक्षतान्यपि
तं वह्निं प्रार्थयित्वा तु वह्निमन्त्रेण देशिकः ९
जातादि पूर्णहोमान्तं मया दत्ताहुति प्रभो
स्वीकृत्य वाञ्छितार्थं मे दत्वा गच्छ हुताशन १०
परिषेकं ततः कृत्वा तं वह्निं च विसर्जयेत्
अथ तद्भस्म संगृह्य पावनं पापनाशनम् ११
दद्याद्भक्तजनेभ्यश्च यजमानादि देशिकः
तद्भस्मधारणेनैव महापातकसंचयः १२
नाशनं च समायातस्तूलराशिरिवाग्निना
यागेश्वरीं समभ्यर्च्य ततो द्वारादिदेवताः १३
यागेश्वरी नमस्तुभ्यं सर्वयागफलप्रदे
गृहाण तव कुम्भार्चां देहि मे धनसम्पदाम् १४
संपूज्य तत्तत्कलशैः अभिषिच्य विसर्जयेत्
नमस्तुभ्यं मूलमाये निजानन्दस्वरूपिणी १५
विविधान् विभवान् देही गृहाण तव पूजनम्

नमो विद्येशिनामाख्याः सदा कुम्भेषु संस्थिताः १६
कुम्भाष्टकार्चनं पूर्वं गृह्णन्तु सुरवन्दिताः
कुम्भेश्वरी नमस्तुभ्यं सर्वकुम्भाधिवासिनी १७
सर्वकुम्भार्चनं देही गृहाण कुलवृद्धिदे
देवी कुम्भं च विद्येशी कलशांश्च द्विजोत्तमैः १८
वाहयित्वा महावाद्य वेदघोषपुरस्सरम्
ग्रामप्रदक्षिणं कृत्वा गर्भगेहे निवेशयेत् १९
लिङ्गे देवीं समावाह्य विद्येशी तत्समन्ततः
तत्तत्कुम्भोदकैः प्रोक्ष्य शुद्धाद्भिरभिषेचयेत् २०
ध्वजावरोहणं कुर्यात् ततस्तद्विधिरुच्यते
प्रथमं मुण्डिनीयागं ग्रामे च बलिदानकम् २१
प्रोक्तं द्वितीयं कलशस्तपनाद्यं तृतीयकम्
ध्वजावरोहणं चोर्ध्वं पञ्चमं तद्विसर्जनम् २२
इति कर्माणि चोक्तानि पञ्चमे त्ववरोहणे
मुण्डिनीमर्चयेत्पश्चाद्गन्धाद्यैर्देशिकोत्तमः २३
मुन्याद्यहानि विन्यस्य ध्यात्वा जप्त्वाथ तन्मनुम्
देव्यापभुक्तनेर्माल्यं दापयित्वा विसर्जयेत् २४
गच्छेद्ग्रामं जनैस्सार्धं उत्सवप्रतिमायुतम्
अस्त्रराजसमोपेतं नानावाद्यादिकैर्युतम् २५
यष्ट्वाग्रमस्त्रदेवांश्च तन्मन्त्राणि समुच्चरन्
तेभ्यो दध्युपदंशाढ्यै हरिद्रान्नैर्विशेषतः २६
बलिं दत्वा विसर्ज्यैतान् प्रदक्षिणवशाद्गुरुः
आलयं प्रविशेत्तत्र बलिपीठे बलिं क्षिपेत् २७
स्थण्डिलं विधिवत्पश्चाच्छालिभिस्तण्डुलैश्शुभैः
विधाय दर्भकूर्चाढ्यैः पीठमाराद्य देशिकः २८
कलशान् नव विन्यासेत्सुवर्णप्रतिमायुतान्

संपूर्य शुद्धतोयैश्च पल्लवाद्यैर्विभूषयेत् २९
मध्यकुम्भे यजेत्सिंहं परितो दिगधीश्वरान्
नैवेद्यान्तं समभ्यर्च्य कल्पयेदुपचारकान् ३०
ततः कुम्भान् समुद्धृत्य सिंहगायत्रिमन्त्रतः
ध्वजमूले तत्समन्तान्मध्यादि कलशोदकैः ३१
संस्नाप्याथ समभ्यर्च्य दत्वा नैवेद्यमुत्तमम्
दिगीशानथ संपूज्य बलिं दत्वा विसर्जयेत् ३२
ततो वादित्रनिर्घोषैर्जयमङ्गलनिस्वनैः
अवतार्य ध्वजपटं न्यसेत्पात्रे सतण्डुले ३३
शुचिनं शिष्यमाहूय भूषितं तस्य मूर्धनि
एतत्पात्रं विनिक्षिप्य कृत्वा धामप्रदक्षिणम् ३४
पटस्थं सिंहमुद्धृत्य तद्बीजमनुमुच्चरन्
योजयेत्तत्र पञ्चास्ये मुद्रयावाहनाख्यया ३५
कृत्वा पूजादिकं चाथ विधिवद्देशिकोत्तमः
ततः प्रभाते विमले कृतस्नानाह्निको गुरुः ३६
देव्याश्च स्नपनं कुर्याद्यथाविधिवशक्तितः
अष्टोत्तरशतैर्वापि कलशैरभिषेचयेत् ३७
तद्विधानं प्रवक्ष्यामि संक्षेपेणाणुपूर्वकम्
पुण्याहवाचनं पूर्वं सूत्रपातादिकं परम् ३८
तृतीयं कुम्भविन्यासं चतुर्थं द्रव्यपूरणम्
पञ्चमं यजनं प्रोक्तं वह्निकर्म ततः परम् ३९
सप्तमं स्नपनं प्रोक्तं ततस्त्वाचार्यपूजनम्
अष्टकर्माणि चोक्तानि स्नपनेऽत्र विधौ क्रमात् ४०
पूर्वा कल्पिते चैव मण्टपे समलङ्कृते
पुण्याहवाचनं कृत्वा विद्वद्भिर्वेदपारगैः ४१
शालिपिष्टे यजेच्छक्तिं शिवं सूक्ते यजेत्ततः

तेन पिष्टोक्तसूत्रेण कुम्भन्यासानुकूलकम् ४२
कृत्वा पदानि विधिवद्वीथिभिश्शोभितानि च
तेषु पद्मानि संलिख्य रञ्जयेत्पञ्चचूर्णकैः ५३
सशालितण्डुलकुश कूर्चानि न्यस्य तेष्वथ
समिष्टिमन्त्रपर्यन्तं पीठं संपूजयेद्बुधः ५४
क्षालितानस्त्रमन्त्रेण वर्मणा सूत्रवेष्टितान्
धूपितान् प्रणवेनैव कलशान् सादयेत्क्रमात् ५५
दश पञ्च त्रिनिष्कोत्थाः कूर्चानि प्रतिमा अपि
कलशेषु विनिक्षिप्य शास्त्रदृष्टेन वर्त्मना ५६
द्रव्यैः संपूजयित्वा तु देव्याद्या देवता यजेत्
फलपल्लववस्त्राद्यैरलङ्कृत्योपचारकम् ५७
दत्वोपचारांश्चानाम्य ततो होमं समारभेत्
कृत्वा वह्निमुखं मन्त्री समिदाज्यचरून् क्रमात् ५८
मूलेनाष्टोत्तरशतं हुत्वा पूर्णाहुतिं हुनेत्
पूर्वादि कुम्भानुद्धृत्य दुर्गासूक्तादिमन्त्रकैः ५९
अभिषिच्यर्च तां देवीं कुर्यात्पूजादिकं ततः
आचार्यं पूजयेत्कर्ता वस्त्रैराभरणैर्मुदा ६०
रत्नानि शयनं गोभू दासीदासगृहादिकान्
हस्त्यश्वादिकवाहांश्च वित्तशाठ्येन वर्जितः ६१
यागोपकरणं चैव सर्वमस्मै निवेदयेत्
तत्करे दक्षिणां दद्याज्जलसेकसमन्विताम् ६२
अधमं दशनिष्कं तु मध्यमं द्विगुणं ततः
उत्तमं निष्कमेकस्मात्त्रिगुणं परिकीर्तितम् ६३
इत्येवमन्त्रसंप्रोक्तात्त्रिविधाचार्यदक्षिणा
तत्पादं मूर्तिपेभ्यश्च दैवज्ञस्य तथैव च ६४
तथैव वेदपाठानां दक्षिणा परिकीर्तिता

दशभागैकभागं तु दक्षिणा मन्त्रजापिनाम् ६५
भक्तानां परिचाराणां स्वशक्त्या दक्षिणोदिता
इत्युक्तविधिना दत्वा दक्षिणां यजमानकः ६६
प्रणम्य तोषयेद्भक्त्या प्रियवाक्यैर्मुदावहैः
तदत्तदक्षिणातुष्टो मूर्तिपाद्यैश्च संयुतः ६७
संस्मृत्य देविमाचार्यादौत्सवं पुण्यमर्थिने
यजमानाय संदद्यात्सोदकं पुष्पसंयुतम् ६८
चन्दनाक्षतसंयुक्तं सकुशं दक्षिणे करे
एवं यः कुरुते देव्या उत्सवं विधिनामुना ६९
तद्राज्ये न प्रवर्तन्ते दुर्भिक्षोत्पातभीतयः
अकालमृत्युपीडाश्च रोगाश्च विविधा अपि ७०
दुष्टग्रहपिशाचानां भूतवेतालराक्षसाम्
पीडनं विषसर्पाणां तस्य राज्ये न जायते ७१
आयुर्बलं यशः कान्तिः प्रज्ञा चैव सुनेर्मला
शौर्यधैर्यविशेषश्च भवेत्तस्य न संशयः ७२
गजाश्वकोशवृद्धिः स्याद्राज्यमैश्वर्यमेव च
सेनासम्पद्विवृद्धिश्च जायतेऽस्य दिने दिने ७३
सोऽपि पुत्रकलत्रादिमित्रबान्धवसंयुतः
इहलोके महाभोगान् भुक्त्वा चैव यथेप्सितान् ७४
कुलेकविंशमुद्धृत्य ततः स्वर्गादि भोगकान्
भुक्त्वा चैव तदन्ते तु देवीलोके महीयते ७५

इति श्री विजयागमे पूर्णाहुतिध्वजारोहणस्नपनविधिर्नाम
चत्वारिंशत्पटलः

Finished typing T0625 Vijayagama.pdf

अष्टविद्येश्वरमूषिकर्
ह्रस्वमूषिकाय नमः
घोरमूषिकाय नमः
वेगमूषिकाय नमः
आखुमूषिकाय नमः
मण्डलमूषिकाय नमः
चण्डमूषिकाय नमः
वक्रमूषिकाय नमः
सत्यवाचक मूषिकाय नमः

विघ्नेशोत्सवविधिः
गणेशोत्सवं गणेशाय नमः

अथातः संप्रवक्ष्यामि गणेशोत्सवमुत्तमम्
सर्वशान्तिकरं पुण्यं सर्वलोकहितावहम् १
सर्वविघ्नविनाशार्थं सर्वानुग्रहकारकम्
प्रथमन्तूत्सवानाञ्च विघ्नेशोत्सवमाचरेत् २
नवाहमुत्तमं ज्ञेयं सप्ताहं मध्यमं भवेत्
अधमं त्र्यहपञ्चैकं नवाहं ध्वजबन्धनम् ३
परिवारे स्थापितं पूर्वं विघ्नेशं उत्सवं न च
स्वतन्त्रं द्वित्रये वाऽपि स्थापितञ्चोत्सवं कुरु ४
तद्दिनात्पूर्वरात्रौ तु कारयेद्वास्तु कर्मकम्
त्रिशूलं स्थपयेद्दण्डे यानं रम्ये मृदं गृहेत् ५
अङ्कुरार्पणयित्वा तु पूर्वोक्तविधिना सह
++++++++++++++++++++++++ ६
तन्म + पे वेदिकां कुर्यात् शैलेन पञ्चतालकम्
त्रिगुणन्तु विमानस्य द्विगुणं तत्समन्तु वा ७

दराडदैर्घ्यमिदं प्रोक्तं दराडनाहद्विहस्तकम्
दराडस्य द्विगुणं दीर्घं कनिष्ठाङ्गुलनाहकम् ८
शुद्धरज्जुं प्रकुर्वीत लम्बितं वलयं दृढम्
प्रपामग्रे प्रकुर्वीत वीतानादि परिष्कृतम् ९
चतुर्वीथी मलङ्कृत्य गृहं प्रति कृपाङ्कुरु
चतुर्विं शत्करायान्तु विस्तारं पञ्चतालकम् १०
शालीशिक्करणमालिप्य तदंबरगणांशकम्
द्वयांशन्तु त्त्यजेन्मूले एकांशे मूषिकं लिखेत् ११
पृष्ठे चाङ्कुशं लिख्य तदुर्ध्वे रक्तछत्रकम्
चामरं शशिसूर्यञ्च दक्षवामकपार्श्वयोः १२
अधः कुंभं शङ्खमाल्यं दर्पणं धूपदीपकम्
एवं ध्वजपटं गृह्य मराटपं तत्तदग्रके १३
पताकाद्यैरलङ्कृत्य शालिभिस्थरिडलं त्रिधा
प्रथमस्त्वाद्युयागस्यात् द्वितीयं भेरिताडनम् १४
तृतीयं देवताह्वानं चतुर्थं बन्धयेद्ध्वजम्
पञ्चमं कौतुकं ज्ञेयं षष्ठं वै होमक्रमकम् १५
सप्तमं सन्धिदेवार्चा अष्टमं यागवीक्षणम्
नवमं परिवेषञ्च चूर्णं दशममुच्यते १६
तीर्थमेकादशं ज्ञेयं द्वादशं कुंभमुद्धरेत्
त्रयोदशोऽवरोह स्यात् मौनयानं चतुर्दशम् १७
चराडयागं ततः कुर्यात् पञ्च दशाङ्गमुत्सवम्
नयनोन्मीलनं कुर्यात् पटं आप्ये निधापयेत् १८
तदग्रस्थरिडले कुम्भान् नवसंख्या पटस्य तु
तथा कुंभान् तदग्रे तु ध्वजदराडस्य कीर्तनम् १९
नयनोन्मीलनं कुर्यात् +++++++++++
सूत्रादिभिरलङ्कृत्य पुरायाहं पञ्चगव्यकम् २०

पटं गव्येन संप्रोक्ष्य जलवासन्तु दर्पणे
शयनञ्चास्तमन्त्रेण कापं बध्वा पटे मणिम् २१
आसनादित्रयेणैव मूषिकं मध्यकुंभके
पूजयेद्गन्धपुष्पैश्च टङ्कमुद्रां प्रदर्शयेत् २२
दीर्घवक्त्राय विद्महे ह्रस्वपादाय धीमहि
तन्नो आखुः प्रचोदयात् । इति आखु गायत्री । २३
ध्यानम्
धूम्रवर्णं सुवृत्ताक्षं वक्रबाहुं महाबलम्
किङ्किणीमालया युक्तं अतिवेगं चतुष्पदम् २४
इति ध्यात्वा आवाह्य
ह्रस्वघोरञ्च वेगञ्च आखुमण्डञ्च चण्डकम्
वक्रञ्च सत्यवाचञ्च अष्टकञ्चाष्टकुंभके २५
अष्टमूषिकमाख्यातं पूजयेद्गन्धपुष्पकैः
शुद्धान्नन्तु निवेद्याथ धूपदीपौ च दापयेत् २६
तदग्रे मध्यकुंभे तु पूजयेद्भक्तगणेश्वरम्
वर्धन्यां वल्लभां शक्तिं पूजयेद्विधिपूर्वकम् २७
वामनं शूर्पकर्णञ्च लंबोदरगजाननम्
कपिलञ्चैकदन्तञ्च विकटं क्षिप्रमेव च २८
विघ्नेशान् गणनाथस्य प्रोक्तकुंभेषु पूजयेत्
नानाफलानि मुद्गान्नं धूपदीपञ्च दापयेत् २९
अग्निकार्यं तदग्रे तु कुण्डे वा स्थण्डिलेऽपि वा
मूषिकं भावयेदग्नौ गायत्र्या समिदादिभिः ३०
प्रत्येकन्तु शतं हुत्वा व्याहृतिं पूर्णमाचरेत्
पश्चाद्गणेशमग्नौ तु भावयेद्धोमयेच्छतम् ३१
गणेशस्य तु मूलेन गायत्र्या च सहस्रकम्
द्रव्यान्ते व्याहृतिं हुत्वा पूर्णाहुतिमथाचरेत् ३२

गजाननन्तु यानार्थं सङ्ग्रहेत्वभिषेचनम्
लड्डुकं धूपदीपञ्च रात्रिशेषं समापयेत् ३३
देशिकः प्रातरुत्थाय कारयेन्नित्यकर्म तु
गणेशस्य तु पूजान्ते यजेद्धटान् हुतं यथा ३४
तद्रात्रौ सायपूजान्ते आखुयानं समापयेत्
शिबिकायां पटे न्यस्य त्रिशूलेन प्रदक्षिणम् ३५
पटं गव्येन संप्रोक्ष्य अस्त्रमन्त्रं समुच्चरन्
प्रोक्षयेत्कुंभतोयैश्च गन्धपुष्पैरलङ्कृतम् ३६
शुद्धान्नन्तु निवेद्याथ धूपदीपन्तु दापयेत्
गव्येन प्रोक्षयेद्दण्डं अभिषिच्य घटोदकैः ३७
विघ्नेशं भावयेद्दण्डं दत्वा त्रयमथार्चयेत्
केटकादौ समारोप्य विघ्नराजमलङ्कृतम् ३८
वाद्यैश्छत्रैश्च दीपैश्च सर्वभक्तजनावृतम्
सुमुहूर्ते ततो यानं दण्डयानं समाविशेत् ३९
स्थण्डिलत्रितयं कल्प्य त्रिशूलं पश्चिमे न्यसेत्
पूर्वभेरीं घटं मध्ये पुण्याहं तत्र वाचयेत् ४०
अर्चयित्वा महाभेरीं ताडयेत्तु क्रमेण ताम्
तं विसृज्य त्रिशूले तु निर्झरानर्चयेत्क्रमात् ४१
मध्यपत्रे गणेशन्तु वीरं दक्षिणपत्रके
वीरेशं वामपत्रे तु पालिकायान्तु वल्लभाम् ४२
विकृतिं पालिकादक्षे तद्वामे तु विलासिनीम्
प्रमत्तं कुंभदेशे तु तन्मूले तु ++ काननम् ४३
लोकसाक्षी च दण्डाग्रे दण्डमध्ये निशाकरम्
मुनीन्द्रदण्डमूले तु दुर्धरं पूर्वदिग्दले
अग्नौ नन्दिं कटाक्षञ्च दक्षिणे भूतनायकम् ४४
नैर्ऋते ह्रस्वपादञ्च बृहत्कुक्षीञ्च वारुणे

कुण्डोदरन्तु वायव्यां उत्तरे सिंहगर्जितम्
ईशे अशनिपाणिञ्च दलाग्रेष्वर्चयेत्क्रमात् ४५
नैवेद्यं धूपदीपञ्च प्रत्येकन्तु समाचरेत्
ध्वजवस्त्रं समादाय रज्जुभ्यां बन्धयेद्दृढम् ४६
सङ्कल्पं कारयित्वाऽथ दशदानन्तु कारयेत्
ध्वजपीठन्तु संप्राप्य तस्य मन्त्रं समुच्चरन् ४७
आखुणायत्रि मन्त्रेण ध्वजमारोपयेद्बुधः
आवृतध्वजदण्डे तु शूलं तत्र निधापयेत् ४८
उक्तद्रव्यैस्तु संस्नाप्य गन्धमाल्यैरलङ्कृतम्
दर्भैः पुष्पैः परिस्तीर्य ब्राह्मणं वेदिकोपरि ४९
दण्डे वेदं पटे ज्ञानं स्वरं रज्जौ समर्चयेत्
इष्टौ इन्द्रं कुशे सोमं वलये सूर्यमण्डलम् ५०
वासुकीं दर्भकालायां शूलमुद्रां प्रदर्शयेत्
मत्तञ्चैव प्रमत्तञ्च कुण्डञ्च कुटिलाननम् ५१
सिंहवक्त्रं बृहत् बाहुं सति दीर्घमजाननम्
अष्टभूतन्तु पूर्वादि ध्वजपीठे बलिं ददेत् ५२
धूपदीपं परिभ्राम्य आशीर्वादन्तु कारयेत्
गणेशं विन्यसेत्पश्चात् स्वर्णादिसूत्रमावृतम् ५३
अर्चयेत्तण्डुले चैव अष्टनागं समुच्चरन्
बन्धयेद्विघ्नराजस्य हृदयेन गुरूत्तमः ५४
अस्त्रस्य देशिकस्यापि चण्डेशस्य च बन्धयेत्
बन्धयेद्बलिपीठस्य न बध्वा मूललिङ्गके ५५
षडूर्ध्वासनमभ्यर्च्य सुवाज्यं मोदकं ददेत्
धूपदीपं परिभ्राम्य यागशालां समाविशेत् ५६
लेपनं वाचकं कुर्यात् पताकाद्यैरलङ्कृतम्
मध्ये वेदिञ्च षट् तालं अश्रकुण्डं चतुर्दश ५७

भूताश्रन्तु प्रधानं हि हस्तमात्रं यथाक्रमम्
शालिभिस्थरिडलं कृत्वा तराडुलैश्च तिलैरपि ५८
स्वर्णादि संगृहेत्कुंभान् सूत्रादिभिरलङ्कृतम्
स्थापयेत्स्थरिडले विधि यामाङ्कुरं प्रकल्पयेत् ५९
यज्ञसाक्षिं यजेत्पूर्वं द्वारारायभ्यर्चयेत्पुनः
गस्तिकलामतिक्रूरं महाकायं पुरन्दरम् ६०
अग्निवृद्धिञ्च निश्वासं कुटिलं दक्षिणाधिपम्
ब्रह्माणं निर्ऋतिं विष्णुं शुद्धदीर्घमजास्यकम् ६१
वरुणञ्च लक्ष्मी स्कन्दं गणेशमनिलं तथा
ज्ञानञ्चैव विशालाक्षं भीमं सोमं गुरुं शिवम् ६२
विधिञ्चैव क्रमेणैव पूजयेद्गन्धपुष्पकैः
पताकादीन् समभ्यर्च्य क्षुरिकं शूलमङ्कुशम् ६३
नाराच दराडवेतालं खड्गपाशमणिं तथा
लायाङ्गन्तु दशास्त्रं हि अर्चयेत्तु क्रमेण तु ६४
पद्ममुत्पलमायाखुचामरं पादुकं तथा
छत्रञ्च व्यजनं शङ्खं चापञ्चैवाष्टमङ्गलम् ६५
वेद्यावृतं समभ्यर्च्य वल्लभामस्त्रमूर्तिनम्
आसीनं भूतशुद्धिञ्च गव्यञ्च शोधनं भुवः ६६
विकिरं ज्ञानखड्गं च पूज्यं चास्त्रप्रदक्षिणीम्
स्थिरासनन्तु तद्ध्यानं पूजयेद्वेदिकोपरि ६७
गणेशं वल्लभं शक्तिं मध्ये वामे च पूजयेत्
वामनं कपिलं कान्तं नृत्त अर्ध्वगजाननम् ६८
महोदरं शूर्पकर्णं पूजयेद्दक्षकुंभके
पाद्यादीन् मोदकादींश्च धूपदीपं तथा ददेत् ६९
अग्निकार्यं पुरा कृत्वा मूर्तिपा स्व स्व कुराडके
समिदादीन् उक्तमन्त्रैर्होमयेच्छतसंख्यया ७०

पुनर्मूलैः सहस्रन्तु अन्यकुराडे यथा हुनेत्
ततो यानं गरोशन्तु तदस्त्रे बलिपीठकम् ७१
आलयाद्बहिः निर्गत्य सन्धिदेवान् समर्चयेत्
प्रविशेदालयं पश्चात् यागशालां समाविशेत् ७२
पूर्णाहुतिं प्रकृत्वा तु अर्चनं पाद्यदानकम्
नैवेद्यं धूपदीपञ्च मन्त्रलाजं त्रिधावृतम् ७३
अपूपमावृतान्ते तु दत्वा दीपं समर्पयेत्
आस्थानमराटपे न्यस्य गरोशं चराडबिंबकम् ७४
इक्षुखराडमुद्गमाषं पञ्चान्नञ्च फलानि च
गुलोदकमपूपञ्च तांबूलञ्च निवेदयेत् ७५
धूपदीपान् दर्पणादीन् दापयेत्स्वस्वमन्त्रतः
मन्त्रपुष्पञ्च पाद्यादीन् वाद्यनृत्तं समापयेत् ७६
स्नपनं शान्तिहोमञ्चाभिषेकमुपचारकम्
उत्सवान्तं द्विकालं हि यानान्ते तु समाचरेत् ७७
नित्यपूजां पुरा कृत्वा पश्चाद्धोमं बलिक्रमम्
बल्यन्ते यानमाश्रित्य यागाद्ग्रामप्रदक्षिणम् ७८
मत्तञ्च ऋषिगान्धर्वं शतक्रतुगरोश्वरम्
चराडं भूतञ्च गोविन्दं चतुर्वक्त्रञ्च योगिनम् ७९
दीनदेवानिति स्मृत्वा पालानां वामके बलिम्
पाटश्रं रक्तदोरं चंपकञ्चोत्पलं तथा ८०
पङ्कजं केतकी व्याघ्रं द्रोरामर्कं नव स्मृतम्
माषान्नञ्च गुलान्नञ्च दध्यन्नं पायसं फलम् ८१
अपूपञ्च तिलान्नञ्च तिलान्नञ्चाक्षतं नव
अर्चयेद्दीनदेवानां उक्तपुष्पं क्रमेरा तु ८२
केटकन्तु प्रभाते स्यात् रात्रिकाले तु वाहनम्
रात्रौ यानं विहीनञ्चेत् वाहनं तत्प्रभातके ८३

प्रथमे शिबिका चैव द्वितीये कल्पवृक्षकः
तृतीये सिंहयानञ्च चतुर्थे भूतवाहनम् ८४
पञ्चमे मूषिकारूढं गजयानन्तु षष्टकम्
सप्तमं वाजियानञ्च अष्टमं यालियानकम् ८५
नवमन्तु रथारूढं दशमं चित्रमञ्चकम्
यामक्रममिति प्रोक्तं क्रमेणैव समाचरेत् ८६
स्थित्वा षोडशविघ्नेशं सहयानं दिने दिने
बद्ध्वा सूत्रन्तु एतेषां पञ्चमे मुक्तिभावकम् ८७
नवमे रथयात्रान्ते प्रायश्चित्तन्तु कारयेत्
तद्रात्रौ यागशालायां तीर्थाङ्कुरं समाचरेत् ८८
ईशाने स्थण्डिलं कृत्वा स्थापयेन्नववर्धनीम्
गङ्गादिनार्चयेत्तेषु दशास्त्रं परितो यजेत् ८९
दशमे तु गणेशाग्रे चूर्णोत्सवमथाचरेत्
धृत्वा चूर्णं गणेशस्य सर्वेषां दापयेत्ततः ९०
कौतुकं वर्जयेत्तत्र संपाद्य रजनीजलम्
ध्वजाङ्कुरध्वजे न्यस्य क्षिपेत्तोयं जलाङ्कुरम् ९१
सर्ववाद्ययुतं यानं यागाद्ग्रामप्रदक्षिणम्
तीर्थतीरे तु संप्राप्य गङ्गादीन्योजयेज्जले ९२
पुण्याहं स्नपनञ्चास्त्रमभिषिच्य जलाद्गृहेत्
वस्त्रादिभिरलङ्कृत्य स्नपयेद्विघ्ननायकम् ९३
वस्त्रादिभिरलङ्कृत्य नैवेद्यं धूपदीपकम्
प्रविशेदालयं पश्चात् पूर्णाहुतिमथार्चयेत् ९४
अग्निस्थं योजयेत्कुंभे कुंभान् ग्राह्य प्रदक्षिणम्
न्यसेन्मूलगणेशाग्रे अर्चनं मूर्तियोजनम् ९५
प्रधानकुंभोदकेन अभिषिच्य गणेश्वरम्
मूलेन वर्धनीं पीठे परितश्चाष्टकुंभकान् ९६

मन्त्रपुष्पन्तु मन्त्रान्नं धूपदीपञ्च दापयेत्
न्यसेन्मखाङ्कुरं पीठे दक्षिणां दापयेद्गुरोः ९७
तद्रात्रौ नित्यपूजान्ते ध्वजाग्रे स्थण्डिलं कुरु
वाचयेत् स्नपनं कुर्यात् ध्वजदण्डेऽभिषेचयेत् ९८
ध्यानमर्चनमाश्रित्य यानं पश्चाद्गणेश्वरम्
स्थितं तत्र बलिं पीठे धूपदीपन्तु दापयेत् ९९
दत्वा स्वर्णन्तु विप्राणां गायत्र्या चोक्तमन्त्रतः
ध्वजावरोहनं कुर्यात् योजयेन्मूषिकोपरि १००
शूलदेवान् विसृज्याऽथ आशीर्वादञ्च कारयेत्
भक्तानां दापयेद्भस्म तत्स्थानाद्वीथिमावृजेत् १०१
वर्जयेत्सन्धिदेवांश्च प्रविशेदालयं प्रति
तदस्त्रेण बलिं मौनं दापयित्वा गुरूत्तमः १०२
स्नपनञ्चाभिषेकञ्च रात्रिशेषं समापयेत्
द्विदिने त्रिदिने वापि प्रायश्चित्तं समाचरेत् १०३
आलयालेपनं गव्यं स्नपनं पञ्चविंशतिः
सहस्त्रं होमयेदस्त्रं स्नापयेन्मूलनायकम् १०४
पूजयेद्यानविघ्नेशं यथा स्थाने तु विन्यसेत्
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् १०५
इति विजयतन्त्रे विघ्नेशोत्सवविधिः पटलः

जलक्रीडोत्सवविधिः

यस्य प्रसादाद्भुवनं धूयते स चराचरम्
तं प्रणम्य महादेवं भगवन्तं उमापतिम् १
केदारव्रतमाहात्म्यं सर्वकल्याणकारणम्
प्रवक्ष्यामि जगत्येवं मुनिप्रवरसंमितम् २
यद्भवात्यै पुरा प्रोक्तं गौतमेन महर्षिणा

ग्रात्तुं शाङ्करदेहार्धं देव्यया संवृतं यथा ३
यद्व्रतं चरतां लोके संभवन्ति विभूतयः ४
ग्रारोग्यमायुः कीर्तिञ्च जायते शृणुतामिह
एकविंशति वर्षाणि यच्चरेद्व्रतमीदृशम् ५
ग्रसौ बिभर्तिकल्याणं इह चामुष्य च ध्रुवम्
स्त्रीचेत्समाचरेदेतत् सौभाग्यं कान्तिमेव च ६
ग्रायुः श्रियञ्च लभते भक्तिलोके महीयते
तस्माद्विजो वा राजा वा वैश्यं वा शूद्र एव वा ७
येचाप्यन्ये नरा नारी सहिताश्च समाचरेत्
ग्रस्ति पूर्वोत्तरे भागे पृथिव्यां पृथिवीधरः ८
कैवल्याहुतिविख्याते श्रीमान् लोकनमस्कृतम्
राजतैर्विमलैः शृङ्गैः नवरत्नविभूषितैः ९
तटित्पुञ्जपिशङ्गाभैः शारदाभ्रैरिवावृतः
नाना द्रुमलताकीर्णाः नानापुष्पफलद्रुमैः १०
नानाविहङ्गसंपुष्टो नानानिर्भरसंकुलः
तालैस्तमालैर्भिन्दालैः तिलकैस्तरलैरपि ११
ग्रशोकैः कर्णिकाश्चैव चन्दनैर्देवदाकभिः
+++++++ बहुधा भवेत् १२
देवमुद्धृत्य कृ++त्स्थं तटाकाग्रे नियोजयेत्
तटाकं चण्डवद्ध्यात्वा भक्तानामुत्सवं परम् १३
पराशक्तिशिवं ध्यात्वा जलक्रीडोत्सवं प्रति
प्रतिसंवत्सरं प्रति सान्ते सायुज्यमाप्नुयात् १४

इति विजयाख्ये प्रतिष्ठातन्त्रे जलक्रीडोत्सवविधिः
एकोनपञ्चाशत्

## नवरात्रि उत्सवविधिक्रमः

अथातः संप्रवक्ष्यामि नवरात्रिविधिक्रमम्
अश्वयुक् शुक्लपक्षे तु प्रतिपन्नसमन्तके १
प्रतिपद्दिनमारभ्य मण्टपे समलङ्कृते
ईशान्ये चोत्तरे वापि तथा पूर्वोक्तमण्टपे २
अङ्कुरं स्थापयेद्विद्वान् कूटं वा पालिका युवा
अङ्कुरद्रव्यपूजानि अङ्कुरं वा शुभोदये ३
कुंभोक्तलक्षणैश्चैव अङ्कुरैश्चैव मध्यमे
देवीमावाह्य तत्कुंभे रक्तवस्त्रेण संयुतम् ४
कुम्भाग्रे होमकर्माणि रक्षासूत्रन्तु बन्धयेत्
शक्तिमावाहयेद्बध्वा त्र्यंबकेन तु मन्त्रतः ५
कदा तद्दिनमारभ्य नाना शक्तिजपं बुधः
उत्सवस्थलिहोमञ्च दिनं प्रति दिनं प्रति ६
यथा वित्तानुसारेण नव नैवेद्यमेव च
नवाहं सप्त रात्रं वा पञ्चाहं वा त्र्यहाङ्गिकम् ७
एकरात्रमथारभ्य गजाश्वायुध पूजयेत्
देवीं तदङ्गः पूजाञ्च दिनं प्रतिदिनं प्रति ८
नानावाद्यसमायुक्तं नानागीत समन्वितम्
नाननृत्तसमाक्लृप्तं नानावेदसमन्वितम् ९
प्रतिरात्रमथारभ्य पूजयेत्सर्वशक्तिनः
दशमीञ्च ततः प्रातः तत्कुंभञ्चैव पूजयेत् १०
याम प्रदक्षिणं कृत्वा नानावाद्ययुतैस्सह
पुण्याहं वाचयित्वा तु कुंभश्चैवाभिषेचयेत् ११
नैवेद्यं धूपदीपञ्च रक्षासूत्रं विसृज्य च
दशमी पूजा वक्ष्यते -
तद्दिने च प्रभाते च साये चैव द्विधा मतः

चोत्तरे चैव पूर्वे वा शमीमण्टपसंस्थिते १२
शमीयानमलङ्कृत्य चतुर्द्वारसमन्वितम्
वितानैस्तोरणैश्चैव नानालङ्कारसंयुतम् १३
इन्दुशेखरमूर्तिञ्च तुरङ्गारूढयेद्बुधः
नानालङ्कारसंयुक्तं नानाभक्तजनैः सह १४
अस्त्रमन्त्रेण संपूज्य नैवेद्यं धूपदीपकैः
शक्त्यादानादिकं कृत्वा ब्राह्मणान् वेदपारगान् १५
शमी स्थानं प्रविश्याथ चतुरष्टमृगं वदेत्
शमी पूजा प्रकारेण पुण्याहं वाचयेत्ततः १६
खड्गखेटञ्च चापञ्च स्थापयेत्तु शमी सह
अस्त्रमन्त्रेण संपूज्य नैवेद्यं धूपदीपकैः १७
शक्त्यादानादिकं कृत्वा ब्राह्मणान् वेदपारगान्
ग्रामककृष्णावहं भूपा पञ्च सोष्णीषसुप्रसन्नवान् १८
चतुर्दिक्षु चतुर्वर्णैः गम्यते चैव बुद्धिमान् १९
इति प्रतिष्ठातन्त्रे महानवमी नवरात्रिपूजाविधिः पटलः

शमी पूजां वक्ष्ये
काल्यै नमः । कालरात्र्यै नमः । यमाय नमः ।
यमदुर्ग्यै नमः । ब्रह्मादि चामुण्डान्तं । महालक्ष्म्यै
नमः ।
शमी शतृविनाशाय शमी पापप्रणाशिनी
शमी संपत्करञ्चैव शमीञ्चैव नमो नमः

## कृत्तिकादीपम्

अतः परं प्रवक्ष्यामि कृत्तिका दीपमुत्तमम्
सर्वशान्तिकरं पुण्यं सदा विजयवर्धनम् १

सर्वेषां रिपुनाशार्थं यज्ञकार्यसमृद्धिदम्
कृत्तिके मासि पौर्णायां रात्रौ दीपान् प्ररोपयेत् २
पर्वण्यां कृत्तिकायुक्ते ह्युक्तं च परिकीर्तितम्
अयुक्तञ्चेत्प्रमादेन प्रधानं पर्वमाचरेत् ३
एकाहमुत्सवं ज्ञेयं पूर्वरात्रौ विशेषतः
नित्यपूजावसाने तु स्नानपूर्वं गुरूत्तमः ४
अनुज्ञामूललिङ्गस्य कारयेद्ब्राह्मणैस्सह
मृत्सङ्ग्रहणमाश्रित्य अङ्कुराण्यर्चयेत्ततः ५
तस्माद्वीथिमलङ्कृत्य दीपदण्डं समाहरेत्
उत्तमं नाळिकेरन्तु मध्यमं तालवृक्षकम् ६
अधमं वेणवादिञ्च सङ्ग्रहेल्लक्षणान्वितम्
शुष्कं वक्त्रञ्च भी ++ ञ्च स्वयं पतितमेव च ७
कृमिकोटकसंयुक्तं वर्जयेत्तान् विचक्षणः
षोडशन्तु बिलं दण्डे शिवाग्रे बलिविन्यसेत् ८
तन्मूले वेदिकां कृत्वा हस्तं हस्तार्धमेव वा
गोपुरोच्चसमं दण्डमुत्तमं परिकीर्तितम् ९
गलान्तं मध्यमं ज्ञेयं ह्यधमं मध्यमानकम्
अथवान्यप्रकारेण प्रासादोच्चसमन्तु वा १०
गलान्तं वेदिकान्तं वा प्रस्तरान्तकमेव वा
दण्डदीपमिति ख्यातं उपदण्डैलङ्कृतम् ११
बन्धयेत्तालपत्रैश्च पीतवस्त्रैरलङ्कृतम्
तथा देव्या गणेशस्य गुहस्यापि प्रकल्पयेत् १२
प्रविशेदालयं पश्चात् देवदेवीं गणेश्वरम्
गुहञ्च चण्डनाथञ्च आन्दाया स्थानमण्टपे १३
प्रत्येकं स्नपनं कुर्यात् पाद्यादिपञ्चगव्यकम्
शान्तिहोमं प्रकर्तव्यं बिंबशुद्धिमथाचरेत् १४

स्नानद्रव्यैश्च तोयैश्च स्नपयेच्चाभिषेचयेत्
वस्त्रादिभिरलङ्कृत्य विन्द्यादीन् नृत्तसमायुतम्  १५
नैवेद्यं धूपदीपञ्च प्रत्येकं शम्भुना ददेत्
मन्त्रपुष्पन्तु पाद्यादि तत्तन्मन्त्रेण दापयेत्  १६
रक्षासूत्रं क्रमेणैव प्रत्येकं बन्धयेत्ततः
बन्धयेदस्त्रराजस्य देशिकस्य न बन्धयेत्  १७
नैवेद्यन्तु पुनः कृत्वा धूपदीपन्तु दापयेत्
तदन्ते मूललिङ्गाग्रे शालिभिस्थण्डिलं कुरु  १८
अष्टपत्रं समालिख्य त्रिपादि स्थण्डिले न्यसेत्
वलये सोममभ्यर्च्य पादानाञ्च गुनत्रयम्  १९
तदूर्ध्वे स्थालिकं न्यस्य तन्मध्ये चतुराननम्
मुखे विष्णुं समभ्यर्च्य तं लाजैश्चैव पूरयेत्  २०
लाजञ्च द्रोणमादाय शिवं वा शोधयेद्गुरुः
दीपाधारन्तु स्वर्णादि मृण्मयं वा नवीकृतम्  २१
द्विप्रग्रहणमाज्यञ्च पञ्चकं पात्रसङ्ग्रहेत्
लाजोपरि न्यसेद्धीमान् पूजयेद्गोघृतेन तु  २२
द्वात्रिंशत्तन्तुना वक्त्रं तन्मुखे षोडशेन तु
पूर्वाग्रमुत्तराग्रञ्च बन्धयित्वा स लक्षणम्  २३
पश्चाद्धोमं तदग्रे तु मूलेनाष्टादशं हुनेत्
तदग्नो दीपमादाय आसमन्त्रं समुच्चरन्  २४
प्ररोपयेत्पञ्चके चैव मध्यादि मूलमन्त्रतः
प्रधानाभिमुखं दीपन् मध्ये ईशानमर्चयेत्  २५
पुरुषं पूर्वरूपे तु अघोरं दक्षिणे तथा
उत्तरे वामदेवन्तु सद्योजातन्तु पश्चिमे  २६
पूजयेत्पुष्पगन्धैश्च पद्ममुद्रां प्रदर्शयेत्
धूपदीपं हृदं दत्वा अथवा पञ्चभूतकम्  २७

निवृत्यादि कलां वापि पूजयेत्पञ्च दीपके
तदन्ते व्याहृतिं हुत्वा अघोरेण शतं हुनेत् २८
पूर्णाहुतिं प्रकुर्वीत वाद्यघोषसमन्वितम्
वह्निस्थमीशदीपे तु याजयेन्मूलमन्त्रतः २९
पश्चात्स्थानिमादाय अथवा परिचारकम्
नववस्त्रद्वयं दत्वा रक्षासूत्रन्तु बन्धयेत् ३०
गन्धमाल्यैरलङ्कृत्य पञ्चनिष्कन्तु दक्षिणाम्
वेद्यग्रे स्थण्डिलं कल्प्य पञ्चदीपं प्रकल्पयेत् ३१
मध्ये सदाशिवं पूज्य पूर्वे रौद्रीं समुच्चरन्
दक्षिणे वैष्णवीं दीपे वैधसीमुत्तरे तथा ३२
पद्मिनीं पश्चिमे देशे गन्धाद्यैर्नृपचारकैः
स्थण्डिलन्तु गणेशाग्रे पञ्चदीपं प्रकल्पयेत् ३३
वामनं पिङ्गलं रक्तं बालं वीरञ्च पूजयेत्
गुहाग्रे स्थण्डिलं पश्चात् रसदीपं प्ररोपयेत् ३४
जयन्तं विशिखञ्चैव कृत्तिकावृतमेव च
सुब्रह्मण्यं कुमारञ्च क्रौञ्चभेत्ता तु षष्टकम् ३५
अर्चयेत्तु क्रमेणैव स्वस्वनाम्ना तदन्तके
प्रत्येकं स्थापयेद्दण्डं अलाभे एकमेव च ३६
देव्यादिना विना दीपं शिवदीपं समाचरेत्
तद्देवान् मूलदेवस्य भ्रमणन्तु न कारयेत् ३७
भ्रमणञ्चेत्प्रमादेन निर्माल्यञ्चेति कीर्तितम्
पूर्ववद्दीपमावाह्य पश्चाद्दण्डे सुयोजयेत् ३८
प्रथमं लोकपालानां प्राकारे बलिमाचरेत्
+++++++++++++++++++++++ ३९
वाद्यैर्दीपैस्तदन्ते तु चामरैर्व्यजनैरपि
तन्मूर्ध्नि वेष्टयेद्वस्त्रं तद्दीपान् विहितैश्शनैः ४०

आलयाद्बहिर्निर्गत्य अस्त्रराजसमन्वितम्
दीपदण्डादिकं गत्वा स्थण्डिलोपरि विन्यसेत्  ४१
पुण्याहं वाचयेत्तत्र पञ्च गव्यं प्रकल्पयेत्
आग्नेय्यां दीपदण्डस्य वृत्तकुण्डन्तु कारयेत्  ४२
अग्निकार्यं प्रकुर्वीत रुद्रमग्नौ तदन्तके
ध्यानपूर्वं समावाह्य सर्षपं यवमाज्यकम्  ४३
खादिरञ्च समिद्ग्राह्य मूलेनाष्टशतं हुनेत्
अघोरेण सहस्त्रन्तु आज्याहुतिमथाचरेत्  ४४
शिरसा पूर्णहुतिं कृत्वा अग्निं संपूज्य जागरम्
दण्डवस्त्रेण संप्रोक्ष्य स्नापयेत्पञ्चगव्यकैः  ४५
वेदिकायां परा देवीं नलं दण्डमूलके
मध्ये सदाशिवं पूज्य दण्डाग्रे वायुमर्चयेत्  ४६
उग्रदण्डे चोग्रनाथं बन्धेषु वीरभद्रकः
दर्द्धरक्तालपत्रेषु अंबरे अतिकायकम्  ४७
अर्चयित्वा तदन्ते तु कौतुकं दण्डमूलके
स्नानद्रव्याभिषिच्याथ गन्धपुष्पैरलङ्कृतम्  ४८
मुद्गान्नं व्यजनैर्युक्तं अपूपैश्च निवेदयेत्
दापयेद्धूपदीपन्तु दीपदण्डं बलिं स्मरेत्  ४९
देव्या दण्डं विलासिञ्च विघ्नेशस्य प्रमोदितम्
कुण्डञ्च गुहदण्डन्तु भावयेन्निग्रहाय वै  ५०
त्रिवारग्रहणं द्रोणीं मृण्मयं नव संगृहेत्
क्षालयेदस्त्रमन्त्रेण निरीक्षणप्रोक्षणं तथा  ५१
तिलतैलमेकभारं स्यात् द्विभारं पूरयेद्धृतम्
तस्मिन्नुग्रं समभ्यर्च्य अघोरेणाभिमन्त्रयेत्  ५२
हस्तमात्रन्तु तन्त्वाहं गृहे वृत्तिं समन्तुभिः
मध्ये वर्तं समभ्यर्च्य तदाज्ये निक्षिपेद्धृदा  ५३

दराडमूले वेदिकायां न्यसेद्द्रोणिञ्च वाचके
स्थरिडलं मूललिङ्गाग्रे शालिभिस्तराडुलैस्तिलैः ५४
तराडुलञ्च तिलं मिश्रं द्रोणमूले परिस्तरे
तद्दीपो दीपमादाय आचार्यो मूलमन्त्रतः ५५
तद्द्रोरयां दीपमारोप्य ईशाग्रं दीपमुत्तमम्
कालाग्निरुद्रमावाह्य तद्दीपे रक्तपुष्पकैः ५६
पञ्चदीपान् द्रोणिमूले स्थापयेत्वावृतं यथा
तद्दीपदहनान्तन्तु रक्षा तत्र विशेषतः ५७
अथवा पञ्चदीपन्तु आलये पूर्ववन्यसेत्
शिववदन्यदेवानां दीपान् तत्र क्रमान्यसेत् ५८
यानमस्त्रं तदन्ते तु दीपदराडं निधा वृतम्
प्रविशेदालयं पश्चात् रात्रिशेषं समापयेत् ५९
भास्करास्तमयात्पूर्वं त्रिपादेन त्रिनाडिका
तद्दिने सायपूजाञ्च क्रमेणैव समाचरेत् ६०
पूजयेदुत्सवेशञ्च मासपूजां तदन्तके
स्थरिडलं मूललिङ्गाग्रे शालिभिस्तराडुलैस्तिलैः ६१
नवकुंभान् समादाय सूत्रादिभिरलङ्कृतान्
स्थापयेत्स्थरिडले मध्ये आधारादीन् समर्चयेत् ६२
प्रधाने रुद्रमावाह्य वर्धन्यान्तु मनोन्मनिः
अनन्तादि शिखराड्यन्तं पूर्वादीशान्तमर्चयेत् ६३
वस्त्रादीभिरलङ्कृत्य तद्वामे मराडलं यथा
यज्ञवृक्षैश्च प्लक्षैश्च दीपाधारान्तु कारयेत् ६४
चतुर्हस्तं त्रिहस्तन्तु फलकाचाष्टविंशतिः
वेदहस्तन्तु विस्तारं स्तंभनाहत्र्यहङ्गुलं ६५
पञ्चाङ्गुलन्तु विस्तारं फलकायां प्रकल्पयेत्
अग्रे अग्रे बिलं कुर्यात् तेषु स्तंभं निवेशयेत् ६६

क्षालयेदस्त्रमन्त्रेण स्थापयेत्कुंभमावृतम्
अखिलं गोमयं न्यस्त्वा दीपाधारं शताष्टकम्  ६७
गोमयेषु क्रमान्यस्यात् पूरयेद्गोघृतेन तु
न्यस्त्वा वर्तिञ्च कुंभाग्रे पश्चाद्धोमं समाचरेत्  ६८
होमयित्वा पूर्णान्तं तेषु दीपान् प्ररोपयेत्
शुद्धान्नं पायसान्नञ्च कुंभानाञ्च निवेदयेत्  ६९
पश्चाल्लिङ्गस्य नैवेद्यं उक्तवद्देशिकोत्तमः
धूपादि पद्मदीपान्तं भस्मादिव्यजनान्तकम्  ७०
वाद्यनृत्तसमायुक्तं कुंभाग्रे दापयेत्क्रमात्
मन्त्रपुष्पन्तु पाद्यादि कुंभस्थन्तु समर्पयेत्  ७१
रव्यस्तमनवेळायां प्रासादे मण्टपेषु च
गोपुरेषु च भित्तयादौ प्राकारे पचनालये  ७२
वास्तुद्वारेषु रम्येषु घृतैर्दीपान् प्ररोपयेत्
भास्करास्तमयात्पश्चात् देवदेवीं गणेश्वरम्  ७३
गुहञ्च चण्डनाथञ्च शिबिकायां दृढं न्यसेत्
वस्त्रादिभिरलङ्कृत्य शिवास्त्रमपि भूषितम्  ७४
वाद्यैर्दीपैश्च छत्रैश्च चामरैर्व्यजनैरपि
नानाभक्तसमायुक्तं गणादीन् यानमाचरेत्  ७५
इन्द्रादीनान्तु प्रकारेण बलिं दत्वा प्रदक्षिणम्
ईश्वरं दीनदेवञ्च शुद्धान्नन्तु बलिं ददेत्  ७६
दीप्तदण्डान्तिकं गत्वा पुण्याहं तत्र आचरेत्
प्रोक्षयेद्दीपदण्डन्तु तैलाद्यैरभिषेचयेत्  ७७
गन्धमाल्यैरलङ्कृत्य कृसरान्नं निवेदयेत्
दापयेद्धूपदीपन्तु दीपदण्डयुगं गृहेत्  ७८
द्रोणदीपान् समालिप्य स्थानज्ञः शिवमीक्षतु
पञ्चदीपे चतुर्दीपानि ++ श दीपे सुयोजयेत्  ७९

तद्दीपं वाचको गृह्य दण्डस्याग्रे विधापयेत्
+++ ज्ञो दण्डमासाद्य बीजमन्त्रं समुच्चरेत् ८०
लोकोपद्रवनाशार्थं सस्य उत्पत्तिकारणम्
दीपखण्डं त्रिधा भ्राम्य पुरा पूर्वे विनिक्षिपेत् ८१
मूलेन दक्षिणे क्षिप्त्वा पश्चिमे घोरमन्त्रतः
उत्तरे वाममन्त्रेण निक्षिपेदवरोहणम् ८२
महेशमस्त्रमूर्तिं वा दीपदण्डं प्रदक्षिणम्
द्रोणीदीपं शेषमात्रं तालपत्रे निधापयेत् ८३
महाज्वालं प्रकर्तव्यं तच्छिवादुत्तरे शिवे
अग्निस्थं तेन संबोध्य लाजद्रोणं वि+++ ८४
तद्दण्डं च्छेदयेत्पश्चात् उत्तराग्रं विनिक्षिपेत्
तथैव देवीदण्डञ्च गणेशस्य गुहस्य च ८५
अप्रेक्षितं दीपदण्डन्तु नाचरेत् कृत्तिकोत्सवे
विधिः प्रदक्षिणं कृत्य प्रविशेदालयं प्रति ८६
आस्थानमण्टपे न्यस्य प्रायश्चित्तं समारभेत्
प्रथमन्तु महेशस्य स्नपनं पञ्चविंशतिः ८७
तद्देव्याष्षोडशं कल्प्य गणेशस्य गुहस्य च
नवार्घ्यस्नपनं कुर्यात् पुण्याहं वाचयेत्ततः ८८
द्रोणमात्रं न्यसेद्द्रव्यं स्वस्वनाम्ना घटान्यजेत्
कुण्डे वा स्थण्डिले वाऽपि शान्तिहोमं समाचरेत् ८९
तद्वह्नौ होमयेद्देव्याः स्कन्दविघ्नौ पृथक्पृथक्
निर्माल्यं वर्जयेत्पश्चात् नानावाद्यसमन्वितम् ९०
वेदध्वनिसमायुक्तं बिंबशुद्धिं समाचरेत्
प्रथमं स्नपयेद्द्रव्यं स्नपयेच्छाभिषेचयेत् ९१
स्नानद्रव्यैस्तदन्ते तु चन्दनैरर्घ्यतोयकैः
पश्चाद्वस्त्रेण सम्मृज्य वस्त्रादिभिरलङ्कृतम् ९२

शताष्टबिल्वपत्रैश्च महेश्वरं समर्चयेत्
तथैव तुलसी देव्याः स्कन्दस्य करवीरकम् ९३
दूर्वापत्रैर्गणेशस्य चण्डेशस्य तु पाटलम्
तदन्ते मूललिङ्गस्य प्रायश्चित्ताभिषेचनम् ९४
शताष्टस्नपनं कल्प्य पञ्चाशत्स्नपनन्तु वा
उक्तवत्स्नपयेद्धीमान् पुण्याहं पञ्चगव्यकम् ९५
षोडश स्नपनं कृत्वा मूलदेव्यास्तयोस्तथा
कारयेदग्निकार्यन्तु तत्र तत्र यथाक्रमम् ९६
तत्तद्वह्नौ स्वस्वमूर्तिं ध्यानमावाहनं कुरु
घृतादि स्वस्वमन्त्रैश्च ++ स्रं वा तदर्धकम् ९७
होमयित्वा तदन्ते तु अस्त्रेणैव शताष्टकम्
अघोरेण शतञ्चाष्टौ गायत्र्या च शताष्टकम् ९८
तदन्ते व्याहृतिं हुत्वा पूर्णाहुतिमथाचरेत्
वह्निं संयोजयेत्कुंभे मूलमन्त्रं शतञ्जपेत् ९९
तत्पूर्वं ++ स पूजार्थं व्यस्त्वा कुम्भान् प्रतिग्रहेत्
द्वारपूजां समाश्रित्य मूललिङ्गेऽभिषेचयेत् १००
स्नपयेत्स्नपनैः पश्चात् शुद्धान्नं धूपदीपकम्
वाद्यैश्च वेदघोषैश्च स्नानद्रव्यैस्तदन्तके १०१
चन्दनैरर्घ्यतोयैश्च शङ्खतोयैस्तदन्तके
शृङ्गोदकैश्च धारांबुस्नपयेद्बिल्वतोयकैः १०२
लिङ्गं पीठञ्च संमृज्य वस्त्रादिभिरलङ्कृतम्
अर्चना वरुणं पश्चात् सहस्रं बिल्वपत्रकम् १०३
उक्तनाम्ना समभ्यर्च्य मन्त्रान्नन्तु निवेदयेत्
मूलं देव्यास्तदन्ते तु मूलस्कन्दं गणेश्वरम् १०४
अभिषिच्य क्रमेणैव वस्त्रादिभिरलङ्कृतम्
प्रभूतहविषमग्रे च अपूपैर्व्यञ्जनैरपि १०५

पचेत् पक्वन्तु स गुडं लाजं तस्मिन् विनिक्षिपेत्
मिश्रं यथेष्टमादाय स्थलिकासु सुविन्यसेत् १०६
नानाफलैरलङ्कृत्य स्थापयित्वा तदग्रके
तथैव मूलदेव्यग्रे गुहाग्रे वामनाग्रके १०७
प्रभूमुक्तवल्लाजं महेशाग्रे तदन्तके
नैवेद्यं तत्र तस्योर्ध्वे धूपादिव्यञ्जनात्मकम् १०८
वाद्यनृत्तसमायुक्तं तत्तन्मन्त्रेण कारयेत्
मन्त्रपुष्पञ्च पाद्यानि उपचारांश्च कारयेत् १०९
देवानां कृत्तिकामासे किं लाजस्य निवेदनम्
जन्तूनां ज्वरनाशार्थं भूपतीनां जयार्थकम् ११०
कालाग्निरूपमासाद्यं ईश्वरो गर्वनाशनम्
महाबलिं गर्वयुक्तं शक्त्या पुत्रेण मोहितम् १११
सेवार्थमागतं हृष्यं तैलं मूर्ध्नि गतं क्रमात्
शतभारन्तु तत्तैलं तयोर्मूर्ध्नि समुद्भवम् ११२
बलितेनैव भूतस्तु दुश्चर्मो बहुरोमकः
तथैवानार्यपुत्रस्य संप्राप्तं भूमिमावृतम् ११३
प्रभूतसारथी तस्य यत्नेन दुःखसंयुतम्
प्रार्थयित्वा ++शी पश्चात् यथेष्टमभिषेचनम् ११४
तेन शंभुप्रसन्नेन तेषां तैलं दशांशकम्
एकांशरोपयेद्दीपान् कार्तिके मासि पौर्णिमा ११५
तेषामङ्गन्तु एकांश अग्निरूपं प्रतिग्रहम्
तदन्ते निर्मलं देहं देहान्ते मम रूपकम् ११६
सारथीमभयं ह्येवं दण्डाकारस्थितो बलिः
तेषामङ्गं शिखालीनं महाज्वालासमन्वितम् ११७
तत्तैलं शिवमासाद्य दिव्यदेहस्थितं बलिः
देवाश्च ऋषयश्चैव तदन्ते प्रार्थयन् शिवम् ११८

अग्नेरुपशमार्थाय लाजं शंभोर्न्यवेदयन्
तेनैवमग्निरूपञ्च विहाय परमेश्वरः ११६
देवानाञ्च ऋषीणाञ्च जयार्थं शतृनाशनम्
अभिमन्त्र्य च तं लाजं शूलिदत्तं प्रसन्नतः १२०
तद्रूपः कृत्तिकादीपाः नैवेद्यं लाजमेव च
कौतुकन्तु महेशस्य उन्मुच्य निक्षिपेज्जले १२१
स्थापयित्वा यथा स्थाने पञ्चमूर्तिः क्रमेण तु
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् १२१
इति विजय तन्त्रे कृत्तिका दीपोत्सवः पटलः

श्रीवेदारण्य नाथाय नमः
आकद्रा व्रतक्रमः
आर्द्राव्रतोत्सवविधिः

अथ वक्ष्ये विशेषेणाह्यार्द्रोत्सवविधिक्रमम्
धनुर्मासे गृहेद्देवीं अङ्कुरं पूर्वरात्रिके १
नवाहं वाऽथ सप्ताहन्त्वार्द्रोत्सवं त्र्याहकम्
एकाहं वा समाश्रित्य आर्द्रायां तीर्थमाचरेत् २
शंभुना सहितां देवीं नवाहं बन्धयेद्ध्वजम्
शंभुं विहाय देवीं वा बन्धयेत्कौतुकं पुरा
बन्धयेत्स्तुतिभक्तिस्यात् तयोरर्चनपूर्वकम् ३
देव्यालयमलङ्कृत्य मौलिकामण्टपं कुरु
डोलायां मण्टपं कल्प्य उपगृहद्विपार्श्वके ४
लीलागृहं दक्षवामे पताकाद्यैरलङ्कृतम्
तन्मध्ये कल्पयेड्डोलं दरेभिश्चित्ररज्जुकैः ५
मादेका मण्टपे वेदिं कृत्वा मध्ये द्विहस्तकम्
शालिभिस्थण्डिलं तस्मिन् तण्डुलैश्च तिलैरपि ६

तन्तुभिर्वेष्टयेत् कुंभान् नानागन्धांबुपूरितान्
स कूर्चान् पल्लवोपेतान् सरत्नान् सापिधानकान् ७
सवस्त्रान् नालिकेळाराढ्यान् स्थापयेद्दशवर्धनीम्
भवानीं पूजयेन्मध्ये पीठशक्तिञ्च वामके ८
पूर्वाद्या अष्टकुंभेषु वामादीनर्चयेत्क्रमात्
गौरीलताञ्च तद्वामे कृत्वा गौरीं समर्चयेत् ९
मण्डलं व्रतकुंभञ्च पूजयेद्योनिकुण्डके
अग्निकार्यं पुरा कृत्वा हुतं मूले सहस्रकम् १०
स्तोत्रभक्तं द्विकालं हि यानस्तोत्रैः प्रदक्षिणम्
देवीं यानं खेटकादौ प्रातः काले प्रदक्षिणम् ११
रात्रिकालं गृहेद्देवीं विन्यसेड्डोलमण्टपे
तदग्रे स्थण्डिलं कल्प्य नव कोष्ठं प्रकल्पयेत् १२
कोष्ठमस्त्रेण संप्रोक्ष्य नव पात्रं स विन्यसेत्
रात्रिं चूर्णञ्च तन्मध्ये पिष्टचूर्णञ्च पूर्वके १३
लवणं अग्निकोणे तु दक्षिणे तिलचूर्णकम्
सिद्धार्थं नैर्ऋते भागे पार्श्वमेकासबीजकम् १४
रक्तपुष्पन्तु वायव्यां उत्तरे बिल्वमेव च
मातुलुङ्गफलं ईशे शोधयेद्बीक्षणादिभिः १५
शोधयेदस्त्रमन्त्रेण प्रत्येकं देशिकोत्तमः
चित्रान्नन्तु निवेद्याथ धूपदीपन्तु दापयेत् १६
हरिद्रं मकुटे चास्त्रैः आनने पिष्टचूर्णकम्
कण्ठे तु लवणं भ्राम्य वक्षसि तिलचूर्णकम् १७
सिद्धार्थदक्षहस्ते तु कार्पासं वामहस्तके
जठरे रक्तपुष्पन्तु ऊरौ बिल्वं समर्चयेत् १८
मातुलुङ्गफलं पादौ योजयेद्बीजमन्त्रतः
दर्पणादीन् गतो दत्वा अर्चयेन्मन्त्रपुष्पकम् १९

डोलायां रोपयेद्देवीं वाद्यं नृत्तं समाचरेत्
लावरायं तरुणीवेदं सुस्थितं स्तोत्रगानकम् २०
डोलाञ्च चलनं मन्दं डोलगानं समुच्चरन्
भक्तं मूर्तिं ततो यानं देव्यग्रे स्तोत्रमाचरेत् २१
पश्चात्स्तोत्रञ्चाष्टदिक्षु नैवेद्यं धूपदीपकम्
देवीं यानं तदन्ते तु शिवधामप्रदक्षिणम् २२
नीराजनं न्यसेत्पश्चात् नैवेद्यं धूपदीपकम्
स्नपनञ्चाभिषेकञ्च दिनं प्रति समाचरेत् २३
मृगशीर्षमनुप्राप्ते रात्रौ शंभुं प्रतिग्रहेत्
अधिवास्य क्रमेणैव नटेशं पूजयेद्यथा २४
स्थापयित्वा सभामध्ये वस्त्रादिभिरलङ्कृतम्
दर्शनं उदयात्पूर्वं धारयेत्कृष्णगन्धकम् २५
आर्द्रायाञ्चैव मध्याह्ने शिबिकायां न्यसेच्छिवम्
चूर्णोत्सवं प्रकर्तव्यं यानं तीर्थं समाविशेत् २६
प्रपायां विन्यसेत्तत्र नारीणां तैलमाददेत्
हरिद्रोदकं संस्राव्य स्नपनञ्चार्चनं कुरु २७
त्रिशूलेन सह स्नानं सर्वैर्मन्त्र्यैस्तदन्तकम्
स्नापयेत्स्नपनैर्देवीं वस्त्रादिभिरलङ्कृतम् २८
नारीणां दापयेद्वस्त्रं कुङ्कुमं कुसुमानि च
नैवेद्यं धूपदीपञ्च प्रविशेदालयं प्रति २९
भास्करास्तमयात्पूर्वं त्रिपादेन त्रिनाडिका
महेशं पूजयित्वा तु उन्मुखं मराटपं कुरु ३०
तस्मिन् मञ्चे न्यसेद्देवं देवीं डोले तु विन्यसेत्
परस्परमीक्षणस्सन् पार्श्वयोर्वाद्यनृत्तकम् ३१
अपूपं दापयेद्देव्याः पञ्चान्नं शर्करस्य तु
तयोर्दीपमुडुपान्तं दर्पणादीन् समाचरेत् ३२

डोलमूलहंसयानं न्यस्त्वा पूर्वं स वस्त्रतः
डोलयानं प्रकर्तव्यं भक्तमूर्तिसमन्वितम् ३३
रथडोलं चक्रडोलं वाजीडोलं गजाकृतिम्
स्तम्भडोलं महाडोलं युग्मडोलं नराकृतिम् ३४
एवं बाह्ये तु संपाद्य तेषु दासीं प्ररोपयेत्
शिबिकादौ देवदेवीं न्यस्त्वा यानं समाचरेत् ३५
वाद्यैश्छत्रैश्च दीपैश्च सर्वभक्तजनावृतम्
आलयाद्बहिनिर्गत्य भ्रमयेत्सर्वडोलकान् ३६
अन्ते वीथीं समावृत्य एकयामं शनैश्शनैः
प्रविशेदालयं पश्चात्कर्पूरैर्दीपमावृतम् ३७
यात्रार्थं स्नपनं कल्प्य साधयेत्पञ्चगव्यकम्
पूर्णाहुतिं प्रकर्तव्यं व्रतकुंभान् समाहरेत् ३८
यामप्रदक्षिणं कृत्वा मूलदेव्याभिषेचयेत्
स्नापयेद्देवदेवीञ्च देव्या सूत्रं परित्यजेत् ३९
वस्त्रादिभिरलङ्कृत्य नैवेद्यं धूपदीपकम्
प्रभूतं हविषं मूले दत्वा दीपान् समर्पयेत् ४०
अर्चयेन्मन्त्रपुष्पन्तु आशीर्वादन्तु कारयेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ४१
भक्तानां परिचाराणां गायकानां यथा ददेत्
आर्द्राय देवीमुद्दिश्य कुर्याद्व्रतसुमङ्गलीः ४२
अरोगाङ्गं सुमङ्गलं साधुपुत्रमवाप्नुयात्
देवदेवीं यथा स्थाने स्थापयेत्परडहनि ४३
प्रायश्चित्तं न कर्तव्यं कर्तव्यं केतुरोहणे
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ४४
इति विजये प्रतिष्ठा तन्त्रे आर्द्राव्रतपटलः
हरिः ओम् । शुभमस्तु ।

## उडुपोत्सवविधिः

सङ्क्रान्तिसमये सूक्ष्मो यदाज्ञेयः विचक्षणैः
तद्योगस्यात् अधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः १
भविष्यत्ययने पुण्यस्त्रिंशदेव तु दक्षिणे
अतीत उत्तरे नाड्यः इति प्रोक्ता हरद्विजाः २
सङ्क्रान्तिर्विषुवश्चैव विशेषेणायनद्वयम्
वृषवृश्चिककुंभेषु सिंहे चैव यदा रविः ३
उडुपोत्सवं अहं वक्ष्ये श्रूयतां रविसत्तम
पञ्चाशत्कोटितीर्थानां पातालतलवासिनाम्
वर्षादीनाञ्च पक्षीणां ऋृषीणां रक्षणाय च ४
उडुपोत्सवमाश्रित्य पुष्ये वै नवमेऽहनि
ध्वजावरोहणान्ते तु त्रिदिने पञ्च सप्तके ५
पक्षान्ते वा प्रकर्तव्यं तदूर्ध्वं उडुपं न च
अन्यकाले तु मेषादि अष्टम्यां शुक्लपक्षके ६
अष्टाष्टवेणुदण्डांश्च पूर्वाग्रञ्चोत्तराग्रकम्
द्विशतं उ+डन्तु सुदृढं कौतुकैरपि ७
भक्तिभि स्नानमाश्रित्य भस्मरुद्राक्षधारणम्
चतुर्वर्णोद्भवैः शैवैः उडुपं बन्धयेत्ततः ८
द्वित्रिंशद्धस्तविस्तारं उत्सेधं वेदहस्तकम्
नानादण्डं महाशुष्कं त्रिहस्तं नाहबन्धनम् ९
तन्मूले द्विशतं क्षिप्त्वा दारुपीठे तदग्रके
प्रासाददशहस्तेन तन्मध्ये दारुभिः कुरु १०
तदग्रे स्याद्विमानन्तु द्विदलं त्रिदलन्तु वा
वस्त्रादिभिरलङ्कृत्य प्रतिमाञ्च तलं प्रति ११
मण्टपन्तु द्विधा कृत्वा स त्रिपादं तदग्रके
परितः स्थापयेद्विद्वान् सुदृढञ्चतुर्विं शति १२

उत्सेधं नवहस्तन्तु प्रपां पात्रैव कारयेत्
हर्म्याग्रे द्वारपालञ्च विविधैः प्रतिमा न्यसेत् १३
नानाध्वजैश्च छत्रैश्च पताकौ पक्षिजालकैः
दर्पणैर्व्यजनैर्वस्त्रैः लकुचैर्नारिकेळकैः १४
तदस्तु कदलीदण्डैः पूगैश्चैवेक्षुदण्डकैः
नानाफलैश्च पुष्पैश्च नानादीपैरलङ्कृतम् १५
एवं बन्धयेदुडुपं क्षिपेज्जलपरिक्षये
तदन्ते मूलबेरञ्च प्रार्थयेदुत्सवार्थकम् १६
देवस्य देवीं समादाय अथवा चन्द्रशेखरम्
उडुपं सूक्ष्ममेवन्तु गणेशं वा गुहन्तु वा १७
ततस्तु पञ्चबेरं वा क्रमेणैवाभिषेचयेत्
वस्त्रादिभिरलङ्कृत्य रक्षासूत्रन्तु बन्धयेत् १८
न सूत्रमुत्सवे कृत्वा बन्धयेदन्यकालके
पञ्चान्नं व्यजनैर्युक्तं अपूपैश्च फलैरपि १९
पानीयं मुखवासञ्च तांबूलञ्च निवेदयेत्
वाद्यनृत्तसमायुक्तं धूपादिव्यजनान्तकम् २०
कारयेदुपचारांश्च लग्ने चैव चरोभये
सङ्कल्पं कारयेत्तत्र दशदानन्तु कारयेत् २१
वाद्यैर्दीपैश्च छत्रैश्च सर्वभक्तजनावृतम्
स्वस्तिवाचसमायुक्तं चामरैर्व्यजनैरपि २२
चित्रपीठे न्यसेद्देवं ततो यानं द्विजोत्तमैः
पुण्याहं वाचयित्वा तु उडुपः प्रोक्ष्य चास्त्रतः २३
तद्गेहे विन्यसेत्पीठं देवेशं विन्यसेद्दृढम्
शिवेन उडुपे विप्रा नारोहयेद्द्वादशं महान् २४
पञ्चाचायान् समारोप्य अष्टादश सु वाद्यकान्
गणिकाः षोडशन्यस्त्वा चतुष्कं परिचारकाः २५

षोडश कृषिभक्तांश्च तदूर्ध्वं वर्णयेन्नरान्
मूलं पाशुपतास्त्रञ्च पञ्चाक्षरषडक्षरम् २६
मृत्युञ्जयजपेयुश्च शिवाग्रे देशिकोत्तमः
ऋगाद्यध्ययनं विप्रा वाद्यघोषञ्च पूर्वके २७
याम्ये वीणादिगानञ्च शङ्खनादन्तु पश्चिमे
उत्तरे गणिकागानं उडुपयानमाचरेत् २८
अष्टदिक्षु तटाकस्य रथञ्च दिग्गजं तथा
पङ्क्तिदीपान् पताकादीन् महाभेरिञ्च ताडयेत् २९
पावकेनैव लीला च उदके बकमत्स्यकम्
पश्चात् प्रदक्षिणं कृत्वा सप्तपञ्चत्रयन्तु वा ३०
प्रदक्षिणे चाष्टदिक्षु तांबूलञ्च निवेदयेत्
दापयेद्धूपदीपन्तु मोदकं गुडखण्डकम् ३१
सेवकानां विनिक्षिप्य तदन्ते मण्टपे ++
उडुपा बिंबमुद्धृत्य विन्यसेदुत्तमं स्मृतम् ३२
अलाभे उडुपेनैव महानैवेद्यमाचरेत्
धूपञ्चैव महादीपं मन्त्रपुष्पान्तमाचरेत् ३३
वेदं स्तोत्रञ्च नृत्तञ्च वाद्यं धामप्रदक्षिणम्
उडुपे सर्वमाश्रित्य ततो यानं यथा विधि ३४
वीथिप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
नवाख्य स्नपनं गव्यं वाद्यादि स्थापनं तथा ३५
शान्तिहोमं प्रकुर्वीत तद्बेरमभिषेचयेत्
वस्त्रादिभिरलङ्कृत्य प्रभूतहविषं ददेत् ३६
कारयेदुपचारांश्च रक्षासूत्रं परित्यजेत्
विन्यसेत्तु यथा स्थाने आचार्यं पूजयेत्ततः ३७
विप्राणां दक्षिणां कृत्वा भृत्यानां वस्त्रभूषणम्
एवं यः कुरुते मर्त्यः स पुत्रपौत्रविवर्द्धनः ३८

इहैव धनवान् श्रीमान् अन्ते सायुज्यमाप्नुयात्
इति विजयतन्त्रे उडुपोत्सवविधिः पटलः

विजयोत्तरसंहिता

इषुर्विधीयते शंभोः सामान्ये तदरूपिणे
राजाद्रव्यपरित्यागे जीवमुद्दिश्य भावतः १
साच लिङ्गाग्रयाग्रेषु शिवेन परिभाषितः
लिङ्गस्य गुरुमूर्तिं च वह्निर्वा मन्त्रसंस्कृतः २
शिवविद्याधिपासार्धं शिवे ह्यर्थविवेकलम्
लिङ्गाग्नि शिवविद्यासु तुल्यप्रीतिन्निव स्थितिः ३
स्थण्डिले मण्डलं यद्वा यन्मूर्तिरपरं च यत्
युक्ते स्थानतया सर्वं शंभो मूर्तिरनिन्दिताः ४
मूर्तिस्तु द्विविधा शंभो सात्मिका च निरात्मिका
काम्यामन्या परा मूर्तिर्नित्या विज्ञानरूपिणी ५
तया नित्यं शरीरीशः परैर्विज्ञातनुश्शिवः
लिङ्गाद्यन्यतमा मूर्तिमेवं निश्चित्य साधकः ६
प्रत्यहं पूजयेद्देवं पञ्चशुद्धिपुरस्सरम्
आत्मं स्थानगुणाधारद्रव्यमन्त्रविशुद्धयः ७
शुद्धयः पञ्चमन्त्रोक्त विध्युच्यते क्रमेण तु
तन्त्रमन्त्रकृतस्नानं क्षालीकांघ्रिकरः शुचिः ८
कृतहस्ताङ्गविन्यासः सामान्यार्घ्येण पूजयेत्
गणेशं भारतीमूर्ध्वे लक्ष्मीं मध्ये प्रपूजयेत् ९
द्वारस्य दक्षिणे भागे नन्दिगङ्गे प्रपूजयेत्
अन्यत्रकलयगन्धैः पुष्पाक्षतैः शुभैः १०
प्रविश्यसव्यपादेन विद्याङ्गास्त्रमथा यजेत्
वास्तुमध्ये तदीशस्य ततः संश्रित्य विष्टरम् ११

हरहस्तं च संपाद्य तेनैव भवरूपिणा
संयोजयेच्छिवे शुद्धे मार्गं ध्यात्वा सिरश्शमम् १२
हृत्पुटेन सान्तेन शिखा तीते शिवात्मनि
प्रदीप्तकरणे द्विभिनाय द्वा सूर्यमण्डले १३
हृद्गुहाहीनो बिम्बाच्छशक्तितोजात्सृजे सः
उद्यत्पतंगसंकाशमात्मात्मं प्राणरूपिणम् १४
आत्मानमेव संयोज्य भूतशुद्धि समाचरेत्
भूताद्यं त्रिवृत्ताद्य कलास्तत्वादि धारज १५
++क्तं मन्त्रितं पीतं अश्रध्यायेत्कमण्डलुम्
पञ्चोत्पात्रै इता तं सा हितैनैव शोधयेत् १६
धरां शुध्यांस्त्वत्तं प्राप्तत्वं क्षीरसन्निभम्
नाभिधी तमब्जाभं स्मरे खण्डेन्दुसन्निभम् १७
लान्तस्थशिखयाशोध्यं प्राणायामचतुष्टयम्
एवं प्रतिष्ठा संशोध्य कर्णान्तपादतोऽनलम् १८
त्रयं स्वस्तिके विद्यात् रूपं विद्यान्तरोचिरम्
स्मृत्वोद्धातैः त्रिभिः पश्चात् यन्तमनिलं क्षिपेत् १९
षट्कोणं बिन्दुषट्कारस्यां कृष्णं ह्येमतिशोधयेत्
हुंफडन्तास्समायोज्या निवृत्ताद्या विशुद्धये २०
व्योमतत्रं ततो गात्रं व्याप्कं बिन्दुसंज्ञकम्
शुद्धस्फटिकसंकाशं वृत्तमस्त्रेण शोधयेत् २१
अस्त्रं शिवास्त्रमेवोक्तं नान्यत्पाशुपतास्त्रकम्
एवं कलादिशुद्ध्यादि शोदिताशेषबन्धनः २२
मूर्त्या सञ्चिन्तये मूर्तिं प्रणवात्मिकयात्मिकाः
आनीय तस्य सात्मानममृतं चिन्तयेत्ततः २३
मूलेन वौषडन्तेन तव मध्ये शिवासनम्
तत्र मूर्तिश्च संभाव्य ब्रह्मण्यङ्गुष्ठतो न्यसेत् २४

रूशादीनि विभा प्रेस्य शक्यन्तं मन्त्रविग्रहः
दत्वा नेत्रं सगावाह्य शिवमङ्गानि विन्यसेत्  २५
कनिष्ठान्तः शिवं भूयः परमीकरणाय च
विन्यस्य वर्मणा वेष्ट्य योजयेत्सर्वकर्मसु  २६
देहन्यासं ततः कुर्यात् समुद्राभिर्यथोच्यते
रूशं तत्पुरुषाघोरं गुह्यकाजातशंबरात्  २७
आस्यभृद्गुह्यजान्युन्मतकुरुध्वादितिमुखेषु च
ब्रह्मवक्त्राख्य यागं स्यादालालोभंश्य विन्यसेत्  २८
रूशानं परिमूर्ध्नाम्ना पुरुषेण मुखानि तु
हृत्कर्णौ सद्द्वयं ताभिः जठरं चापरोरसि  २९
कुर्यादघोरमन्त्रेण वसुरूपेण मन्त्रवित्
गुह्यलिङ्गो गजस्सानु संधासीद्द्वितयं कटिम्  ३०
पार्श्वश्च कल्पयेन्मन्त्री वामदेवमनुस्मरन्
पादपाणितलं घ्राणं शिरोबाहूरुजं नृषु  ३१
एवं विद्या तनुं स्मृत्वा शिवसतधिपं न्यसेत्
शिवाङ्गानि न्यसेत्पश्चात् हृदादीनि हृदादिषु  ३२
हृदये हृदयं मन्त्रिः शिरश्शिरसि विन्यसेत्
शिखयां तु शिखां न्यस्य कवचं सर्वगात्रकम्  ३३
स्वहस्ततलयोरस्त्रं वस्थानं प्रकृत्यजेत्
अन्तर्यागं ततः कुर्यात् हृदये भावभक्तिभिः  ३४
आसनं मनसा कृत्वा शिवमूर्तिद्वयं ततः
आवाह्य च शिवं साच गमर्घ्यपाद्यादि कल्पयेत्  ३५
पञ्चामृताभिषेकाद्यैः दिव्यगन्धानुलेपनैः
दुकूलपट्टमेवाङ्गवासोभिविविधैरपि  ३६
हेमरत्नमयैः पुष्पैः धूपदीपपवित्रकैः
नैवेद्यैर्विविधैर्देवं सावारं बाह्यवद्यजेत्  ३७

नास्ति + ह्ने तथा कृत्वा सिद्धं सन्दर्पयेद्दिवि
बिन्दोर्निरर्गळस्यन्ति परिशुद्धमृतैश्शिवैः ३८
निर्धूपं धूपदीपाहं बिन्दौ शैवस्स्मरे सह
एवं कृत्वान्तरिष्ठस्थानशुद्धिं समाचरेत् ३९
तलं त्रयास्त्रप्रकारं कवचावेष्टितैः क्रमात्
ततोऽर्घ्यपात्रामनीय प्रक्षाल्यास्त्रेण वारिणा ४०
पुष्पतण्डुलसिद्धार्थ यवदर्भयवैस्तिलैः
अर्घ्यसंहितायां कृत्वा सुरज्याचामृतीकृतम् ४१
अमृतं तोयमाधारशक्तिस्तस्य च कुण्डली
तद्विकारास्थिलाद्यर्थामताधारोधरादयः ४२
अर्घ्यं विशिष्यते तेन येन शंभुः प्रसीदति
तेन द्रव्याणि संप्रोक्ष्य शरेण मन्त्रयेद्धृदा ४३
तेन स्नानं समभ्यर्च्य मन्त्रं शुद्धिं समाचरेत्
ओंकारादिनमः प्रेतामन्त्रानेकादशोच्चरन् ४४
वारावन्निष्टरपदं प्राप्तानु तनुलिङ्गकम्
गायत्रीष्वापुरा पूजां सामान्यार्घ्येण वाचयेत् ४५
सपीठलिङ्गमन्त्रेण क्षालयेन्निर्मलं यथा
आसनं कल्पयेत्तस्य विधिवत्तद्विधीयते ४६
शक्तिमादौ यथाकुर्यात्समस्ताधाररूपिणीम्
तथानन्दं हृदायम्य ज्ञानं वैराग्यसंपदः ४७
अग्नितस्तद्विपर्यासैः प्राप्ते गात्राणिकल्पयेत्
मायाविद्ये मदीभूते पद्मकर्णिकया सह ४८
वामादिशक्तिसूर्येन्दुवह्निबिम्बारिसाधिपम्
हृदा संकल्पयेदेवं पञ्चासनमयं विभो ४९
श्वेतरक्तं च पीतं च कृष्णं पादान्विचिन्तयेत्
नानावर्णानिहात्राणि जदने रक्तपाण्डरे ५०

पद्ममष्टदलं श्वेतं कर्णीकां पीतवर्णिकम्
शक्तयः सूर्यसङ्काशा नवमी स्फटिकोदयम् ५१
योगपीठे विभोर्येवं मूर्तिमस्मिन्निवेशयेत्
हृन्मन्त्रं पुटितं सद्यः मूर्तिं बिन्द्वन्तगोचरम् ५२
चतुर्मूर्तिमयं रक्तं शान्त्यतीतकलान्वितम्
ब्रह्मभिः सकली कुर्यात् षट्संख्यैस्तरडुलोचनैः ५३
एषा विद्या तनुः शंभोः स्वशक्तिकरणात्मिका
तत्र विद्यातनुं कृत्वा ब्रह्मरन्ध्रान्तगोचरम् ५४
शुद्धस्फटिकसंकाशं पञ्चवक्त्रं त्रिलोचनम्
दशहस्तं जगापूटेरारक्तैः पञ्चभिर्युतम् ५५
खड्गाश्च शूलशक्तिप्रसादभयसत्कराम्
सर्पाक्षमालसमरुत्फलसाधिमवाहिरम् ५६
सुश्वेतशानवदनं कुंकुमाभपुराननम्
करालं याम्यपदमामुत्तोत्तरदिङ्मुखम् ५७
क्षीराब्धिपश्चिमाशा स्यात् षोडशाब्दोपलक्षितः
ध्यात्वैवं परमां शंभोस्तनां कलरूपिणम् ५८
तस्य मासाहये +++ सर्वाध्वमूर्ध्वगम्
पूर्णा पुष्पाञ्जलिः कुंभिनिवृत्तान्यमनोगिति ५९
हृत्कर्णतालुश्रुरन्ध्रबिन्दुपर्यन्तगोचरम्
इनेन सहो द्वीर्य ++ सुसन्निभम् ६०
सद्यमन्त्रं समाविश्य विशन्ति ब्रह्मवर्त्मनाम्
स्फुरद्रक्तवितानाद्यैः ललाटे कूटसन्निधिम् ६१
अपाने समरेद्विद्वारावाहनमिदं ++
सदीप्तकिरणाप्रणयाममार्गेण निर्गतम् ६२
पुष्पाञ्जलगतं मूर्तौ हृदा संगस्थपयेच्छिवम्
सन्निधिं सन्निरोधं च हृदा भृङ्गादि विन्यसेत् ६३

महामुद्रां प्रयोगं च मूलेन विधिवन्नयेत्
एवमावाहनाद्यैस्तु महामुद्राविपश्चिमैः ६४
यागादिकरणं कुर्यात् संस्कारैः षड्भिरीश्वरम्
तत्र ब्रह्मादिसोपानत्यागेनाथ शिवात्मनः ६५
अमृतिरध्वामीतस्य बिन्दावभ्युदयस्मृतिः
आहूतसपुरे +++ शस्थानं विभोः ६६
आहृतस्योपविष्टस्य त्वदास्य विनयोदभिः
तत्तत्प्रतिगृहीतत्वं यत्तदीशस्य सन्निधिः ६७
अस्य सन्निहितस्यापि +++
निरोध इति व्याख्यातो मन्त्रमुद्राप्रभावतः ६८
हृदयाहिरस्त्रान्ते मत्तीर्थरप्रधृष्यति
अवकुण्ठ्य तमन्त्रोक्तं व्यापि ++++ ६९
पशुत्वस्य मोचनत्वा द्रावणादणो ++
द्व्यक्षरार्थोपपन्नेषु मुद्रा रुचिरवर्धनि ७०
अस्मादिति क्रियायां ते विश्वानुग्रहकारिणि
त्वया +++ सप्तमप्राप्तव्यं यन्मयाखिलम् ७१
ये विषादपि विच्छिन्नमधिदैवतथागतः
अतः प्रहृष्टवदनं सर्वावयवसुन्दरम् ७२
स्मृत्वार्घ्यपात्रमुत्क्षिप्य पाद्यमाचमनं तथा
संमुखेन करेणाख्यं संविदध्याद्धृदा विभो ७३
धूपयित्वा ततः शंभुदूर्वापुष्पाक्षतैरपि
गव्यपञ्चामृताद्यैस्तु स्नापयित्वा सविस्तरम् ७४
तोयप्रसूनधूपार्घ्यप्रदानान्तरितं यथा
पिष्टामलकरज्याद्यैः विरूक्ष्यैशं सपिण्डकम् ७५
प्रक्षाल्य निर्मलैस्तोयैरन्ते गन्धोदकेन च
चन्द्रचन काश्मीरपिष्टेनालिप्य धूर्जटिम् ७६

सोमं दुकूलपट्टाद्यैः वसनैः परिधाय च
मुक्त्वाद्याभरणा प्रोक्ता विसृजैनाविधैरपि ७७
दत्वा ब्रह्माङ्गसंघातं यथास्थानं विभोस्तनौ
इष्टा सुधूपमाराञ्या दत्वाचमनमर्घ्ययोः ७८
मद्धृतौ तु हविर्दद्यात् समुद्गमब्रह्मभिर्विभोः
ततस्ताम्बूलदानान्ते नद्यादिभ्यो बलिं क्षिपेत् ७९
पश्चादावृती संपूज्य ब्रह्मारायङ्गान्यनुज्ञया
तत्तत्स्थानात्समाहृत्य गन्धपुष्पादिभिर्यजेत् ८०
मध्यमप्रागाद्यसाम्यन्तं निशासुरचायुषु
यजेद्विधिवदस्त्रं तु चातुर्दिक्षु दलाग्रतः ८१
ततो धूपं समुत्क्षिप्य प्रोक्षितं हृदयार्चितम्
आरात्रिकं च परितो दीपाश्चावृतकल्पिता ८२
रक्षोघ्नं तिलकं दत्वा ललाटेषु च भस्मना
आदर्शं चामरं छत्रं यदन्यमपि मङ्गलम् ८३
हृदानिवेदयेत्पूर्वं शिवं वाद्यादिमङ्गलैः
आरात्रिकं प्रदानान्ते रात्रौ नीरजनक्रिया ८४
कप्या तद्विधिश्चेह प्रसङ्गादुच्यतेऽधुना
महानसेथवा छत्रकृते गोमयमराडले ८५
पात्राणि हेमरौप्यादि कृतानि क्षालितानि च
न्यस्त्वा तत्र न्यसेद्वह्निकुराडं तेरारतेश्वरा ८६
नोचेदापतितोद्ब्रह्मे करागुरुवर्तिषु
घृताक्तेषु ततस्तानि गवाद्ध्यानतिमङ्गलैः ८७
वाहयित्वाङ्गनाभिर्वा यदि वा परिचारकैः
शिवाग्रे मराडलं कृत्वा सदघोरेषु मध्यतः ८८
नव वा पञ्च यद्वैकमुज्वलद्दीपसंचयात्
संप्रोक्ष्य हेतिनार्घ्येण हृदा धूपान्तमर्चयेत् ८९

सामान्यवृत्तिसंभूत यदि दीपास्समाहृताः
तदानाभ्युदिनादग्नेः संयोज्याहुत्य विन्यसेत् ९०
पूरको दानवृत्तिभ्यां नीत्वा सद्यादि पञ्चकम्
तता पूर्वोक्तसंस्कारान् कृतोपग्रामयेद्विभोः ९१
त्रिधात्रिभ्येकधा वापि लवणाद्यैश्च दृष्टवत्
ततों भसः प्रदानान्ते दीपान्तात्प्रक्षिपेद्बहिः ९२
तत्रैवनित्यहोमं वा कुर्वीत समिदादिभिः
हेमरौप्यादिपात्रेषु यन्त्रिकासारपत्रिषु ९३
नैवेद्याभ्यायसंसिद्धिनैवेद्यं विविधं ततः
सोपस्कारविशेषेण सावाराय त्रिशूलिने ९४
पानीयं च पृथक् दत्वा भस्तोद्वाहाय चन्दनम्
ताम्बूलं चन्द्रसंयुक्तं दत्वा चण्डाय दापयेत् ९५
नाद्यादिपरिवाराणां बलिं च परितोऽथवा
परिवारतया यत्र बहिः ब्रह्माङ्गसंस्थितिम् ९६
तदा बलिप्रदानान्ते नैवेद्यापनयादिकम्
दूर्वापुष्पाक्षतं यज्ञसूत्रं च परमेष्ठिनः ९७
सौवर्णं वासकार्पासं दत्वा मूलाणुनादतः
पूर्ववच्छिवमावाह्य धूपमारात्रिकं नयेत् ९८
जप्वा शक्त्या हृदा दद्यात् गुह्येत्यादिकया गिरा
गन्धाम्बूलिधिनागुप्तमस्त्रेण कवचेन च ९९
गेयनृत्तस्तुतिस्तोत्रैः जयशब्दादिमङ्गलैः
प्रणामसूवनाद्यैश्च तोषयेत्परमेश्वरम् १००
ततो होमाय लब्धज्ञो यायादनलसंश्रयम्
हुत्वा च तत्र विधिवत् बल्याचमनपश्चिमम् १०१
कृत्वाङ्गकरविन्यासो होमकर्म समर्पयेत्
कारयित्वोत्सवं नित्यं ताण्डवं च विधानतः १०२

पराङ्मुखेन हस्तेन सदातादिवमूर्ध्निषु
दत्वार्घ्यमङ्गानुत्थाप्य हेतिमुद्रापयोगतः १०३
यथास्थानं ततो शंभोरंगजालमुपाहरेत्
विसर्जनस्यापेक्षश्च शिष्टलिङ्गेषु सन्ततम् १०४
भूयोप्यस्य प्रदानेन शिवस्याप्युपसंहृतिः
गमिदं निरपेक्षं स्यात् स्थरिडलादिषु सर्वदा १०५
निरपेक्षः शिवं त्यक्ते लिङ्गशुद्धिर्विधीयते
निर्माल्यमञ्ज्यथा लिङ्गे पुष्पादिकमवस्थितम् १०६
प्रतिमाया यजेद्देवं चतुस्सन्ध्यामथापि वा
पूर्वमध्याह्नतत्प्रातः सायं सायान्तकेषु वा १०७
पूर्वमध्याह्नसायेषु पूर्वमध्याह्नयोस्तु वा
नियतात्मा यजेद्देवं गतिहंसततो तदा १०८
अष्टपुष्पिकायां सोप्यादि स्नपनान्तरम्
अशक्तोहीनवृत्तो वा साच लेशान्निगद्यते १०९
शिवासनं ततो मूर्तिमूलमङ्गानि पञ्च च
दानमेभिः प्रसूतानां स्याच्छिवायाष्टपुष्पकाः ११०
अष्टपुष्पिकया पूर्वसस्वनं न समाप्यते
सायान्ते देवदेवेश देव्या सह समर्चयेत् १११
पुष्कलैर्गन्धपुष्पाद्यैः अपूपाद्युपदंशकैः
समन्तात्पुष्पमालाभिः अलंकृत्य सुविस्तरम् ११२
पूजावसाने स्वगुरुं गन्धपुष्पपवित्रकैः
संपूज्य श्रद्धया नित्यं स्वेष्टलिङ्गविधेवरम् ११३
स्वस्य धारणं लिङ्गस्वेष्टमन्यत्परेष्वपि
स्वेष्टं स्वस्यैव फलदमन्यदन्यत्फलावहम् ११४
ब्राह्मणक्षत्रियो वैश्यः शूद्रावापि तदङ्गना
सौवर्णाद्यनुलोमाश्च स्वेष्टयागाधिकारिणः ११५

अन्येष्वपि च पूज्येष्टा प्रदक्षिणजपात्मिका
सामान्यलिङ्गे पूजां वा नान्ये जात्यन्तरेऽपि वा १९६
साधारणेषु लिङ्गेषु परानुग्रहरूपिणी
पूजयेत्ततस्तत्र सकथा नाथकारवत् ११७
अभिषिक्तस्ततोन्येव साधको दीक्षितोऽथवा
साधारणार्चये योग्या शिवतन्त्र्यादितत्पराम् ११८
स्वेष्टलिङ्गाविधौ नष्टौ विधिनित्योत्सवात्मिका
चोदिता शिवपूजेषु सर्वमन्त्रसनातनि ११९
सर्वतन्त्रप्रवेशोस्य शेष्यते शंकराय तत्
गोपनीया प्रयत्नेन प्रागनिर्यागनिर्मिभिः १२०
अत ऊर्ध्वं समासेन वह्निकार्यं विधीयते
इति श्रीविजयोत्तरे त्रिसहस्रसंहितायां शिवार्चनपटलः
समाप्तः

अग्निकार्यपटलः

अथ सर्वार्चितो यागं कामयातो विधीयते
आग्नेयां कारयेत्कुण्डं वृत्तं वा चतुरश्रकम् १
हास्तिकं मेखलासूक्तं योन्याचोपरशोभितम्
हस्तमात्रा यदाकुण्डं द्वित्रिवेदाङ्गुलोदयाः २
मेखलास्तद्धनश्चान्तः कर्णमात्राद्बहिः स्थितः
कुण्डिका तत्प्रमाणेन विस्तारसदृशं मतम् ३
द्विहस्तादिमानान्तां त्र्येष्टविभाजिते
तेषु भातोङ्गुलो ज्ञेयं तेन तं मेखलां नयेत् ४
वसुमात्रततिः कार्य द्व्यैक्यातो द्वादशाङ्गुला
ग++ सदृशे योनिकार्यं वा कुण्डसन्निभिः ५
कर्णपादववृत्तार्धपुरः पञ्चाशयोगता

योनिकुराडं भवेदेव योन्यहन्यद्ययोगिकम् ६
वसुभागं द्रमादर्वं शन्द्रकोधशशाङ्ककैः
त्रिभागप्रद्वितो मत्स्यैस्त्रिभिर्नैशाचरं भवेत् ७
दशांशवृद्धितो वृत्तं ग्रमादखिलकामदम्
षड्भासवृद्धितो मत्स्यैष सश्रृद्धाङ्गनैनिलैः ८
पद्माहमेखलं पद्मं मर्दनं दराडनस्थितम्
गायत्रियांगदीकदारकर्णाद्युमानतः ९
स्राकर्णां लोचने यष्टपट्टनिर्वदिकांक्षिणाम्
स्थरिडलं तदभावे तु यद्वा गोमयमराडलम् १०
संपाद्यालोक्य दूलेन हेतिना प्रोक्ष्य वर्मणा
स्रभ्युक्ष्यास्त्रेण सन्ताडच घ्ननोद्धारपूरया ११
समीकरणसेकौ च तथा कुट्टनपार्जरे
लेपदं कुराडनिर्माणा परिधानार्चने तथा १२
प्राङ्मुखाभिस्त्रिरेखाभिरुदग्रेशाविनिर्मिता
वज्रीकरण भृङ्गादौ कर्तव्यौ मननासिना १३
त्यस्त्रेणालेखयावद्ववर्मराडभ्युक्षणं तथा
ततो विष्टुतमध्यस्थमकृत्वा दीपेन विष्टरम् १४
तन्मध्ये पूजयेन्मन्त्री हृदा वागीश्वरा विभो
स्मृत्यादिरंसुतद्योगजलीतुर्यमिवानलम् १५
गर्भं नास्यां क्षिपेत्तस्याः परित्यक्ष्य सुरांशकम्
समेत्य वह्नित्रितयं न्यस्त्वा तत्रानुलक्षणम् १६
मन्त्रसंहितायालभ्य धेनुमुद्रामृतीकृतम्
रपूजिनं कृतं कृत्वा य ++ कुराडोपरि त्रिधा १७
ततोपि शीर्णमनलं सदिव्यवं क्षिपेत्
गर्भाधानाय सद्ध्येन संपूज्य जुहुयाद्धृतः १८
पुंस्त्वो वामेन संपूज्य शिरसा जुहुया धृता

इष्वाघोषेण शिखया हुनेत्सुमन्तकविमशी १९
तथैचलत्तरग्यङ्गानि दर्भेनाग्नेः प्रकल्पयेत्
नीकृत्युद्धाटने तत्वा ततोग्ने जननक्रिया २०
ततोग्निर्दीपयेद्विद्वान् स्वरखेन शिवः स्मरन्
नरेनेष्ट्वा तनुत्रेण तिस्रो दद्यात्तिलाहुतिः २१
ततः सूतकनाशाय कुराडौघैः घृणसेचयेत्
ग्रास्तीर्य परितो स्नानाडिनालालभा नयेत् २२
सकृत्कृत्वा हुनेत्पञ्चसमिधः पञ्च एव च
विन्यसे विष्टरंस्तेषु ब्रह्मरुद्राच्युतेश्वरान् २३
मेखलासु च लोकेशान् रक्षार्थं कारियोजयेत्
रूशेनानां कर्मार्थमिष्ट्वा स्त्रोणाहुर्ददेत् २४
नामकुर्यात्ततो वह्नेः शिवाग्निः स्वमिति ब्रुवन्
ततः स्नुक्स्नुवयोः शुद्धिः विधेया यागकर्मणि २५
स्नुक्स्नुवैकं कनीकार्या यद्वा यज्ञतरूद्भवः
साच सबाहुमानाय सर्वाङ्गुलकृतानना २६
एककर्णापि सद्वेति द्विमात्रा सचतुष्किका
द्विसप्तदराडकूले तु चतुष्कल शोभिता २७
द्विमात्राखादषट्वृत्तघृतपुष्करशोभितान्
पृष्ठतोष्टदलोपेतकराचाकारमराडलान् २८
कनिष्ठिकाप्रमाणानि भागत्ताज्यनिर्गमाः
स्नुवेगमलोप्यस्यास्वायं षट्त्रिंशदंशकम् २९
ग्रानैपोपि दैर्घ्यैतो मात्रैस्तैरेवत्रस्र्यष्टसममिधैः
ग्रङ्गुष्ठमानकर्मास्य सकमश्मषाधारपुष्करम् ३०
द्विपुटं पुरतोऽन्यत्र गजमस्तकसन्निभम्
मूलं च कर्षयाधारैः कर्तव्यो नाहतः समौ ३१
ग्राकन्धरं कशः कार्ये गोपालमिव कूलताः

कर्तव्यो स्नुक्स्नुवापिर्थं सदा विश्वफलार्थिभिः ३२
सर्वतन्त्रेषु सामान्यं विमानं चाहमश्वरः
स्नुक्क्रियारूपिणी शक्तिः स्नुवस्साक्षान्महेश्वरम् ३३
तासाभिदक्रियते होमस्ततस्तौ शुभलक्षणौ
कृत्वैवं स्नुक्स्नुवावद्भिः प्रक्षाल्य दहनोपरि ३४
भ्रामयित्वाधमग्रेण मध्यं मध्येन बर्हिषा
दूलमूलेन च स्पृष्ट्वा सर्वे सर्वात्मनात्मनः ३५
न्यस्तोपरिति खण्डं च शिवशक्तितयोर्यजेत्
ततो गव्यं सुपात्रस्थं परिशुद्धं च वाससा ३६
आनीयाग्नौ प्रताप्योद्धेनाभेत्संप्लवौ नयेत्
दर्भाग्रद्वितयं मध्य ग्रन्थितं सत्पवित्रकम् ३७
अनामांगुष्ठयोगां सा अनलस्सममुखम्
तं मन्त्रेण त्रिधा तद्वत् हृदयेनात्मसंमुखम् ३८
तं मन्त्रेण त्रिधा तद्वत् हृदयेनात्मसंमुखम्
प्रादेशमात्रदर्भाग्रमध्ये ततो न्यसेत् ३९
नीराज्योद्दीप्य बहुभिः वक्ष्यार्थाव स्मरेत्
मध्यतोग्निसमध्या तु सोमध्यात्पदद्वयम् ४०
अग्निस्विष्टकृतं चैव हुनेत्पक्षे सिते गुरुः
सितेतरेन्यथा किन्तु सोमं हुत्वा रविं हरेत् ४१
एवं कृते भवेद्वह्नि शिवाय शिवकर्मसु
नाशिवे शिवकर्माणि कर्तव्यानि कदाचन ४२
अतोन्नेतो शिवः कार्यः प्रयत्नेन हुताशनः
प्रवृत्तिरस्य बाढित्वा संस्कारानितरानपि ४३
गदाधानादिसंस्कारः पञ्च भित्वा शिवागम
त्रयाग्नेऽनन्यथा सिद्धा संस्काराकृते पुनः ४४
अभिचारादि कृत्येषु विज्ञेनानैव सिद्धये

अन्यथा सिद्धिसंस्कारे पर्णमन्त्रां शिवात्मने ४५
हुनेद्यसिद्धयेदूर्ध्वौ नाशयेत्यविरेणुता
शैवानाग्रेव मन्त्राणां होमः प्रोक्तः शिवानले ४६
अन्येषां प्राग्गतस्तत्र शिवाग्निर्यच्छिवात्मधीः
मन्त्रा ये वैदिकायां च क्रियापेदादिचोदिताः ४७
शिवेनले नियुक्तश्चेत् सहोतुविनिपातकृत्
अस्मिन्नवसरे वाच्यं हव्यकव्यादि लोतले ४८

यक्षस्सौम्यो गृहास्सर्वे सप्तर्चिष्यसुरस्थितः
पालाश्यानि वृत्तौ वायौ नागनक्षत्रराशयः ५९
तथा विश्वगुणा वाता क्षेत्रपो वायु दक्षिणे
यथास्थानस्थितो तेजः सन्तर्प्य बलिभिः शुचिः ६०
उपसंहृत्य तन्यायात् सार्घ्यपात्रः शिवान्तिकम्
समर्पिता क्रियापुनरष्टासकुश्शिवम् ६१
विसर्जयेत्तत्र देवं तत्प्रकारः पुरोदितः
विसर्जयित्वा देवेशमग्निमध्ये स्थितं पुरा ६२
चरमं लिङ्गमध्यस्थावयवं नैमित्तिकेऽपि च
रात्रौ पूजा गिरं हुत्वा शिवार्च्य परिकल्प्यते ६३
निशाविभवनं पूजागिरं हुत्वा शिवार्च्य परिकल्प्यते
निशाविभवनं पूजामित्याह विगच्छिवः ६४
अग्निकार्यसमाप्येऽस्मिन् कार्यो नित्योत्सवो विधिः
अथ वक्ष्ये विशेषेण सकलाराधमक्रमम् ६५
स्वतः प्रधानमङ्गं च द्विविधं तत्प्रकीर्तितम्
परिवारयुतानां च द्वितीया च विवर्जितम् ६६
पुनस्तद्द्विविधं ज्ञेयमचलाचलभेदतः
चललोहमयं प्रोक्तं शैलजं रत्नजं तु वा ६७

पटादिलिखितं बेरमृण्मयाकाष्ठजं तु वा
एतदेव स्थिता कार्यं पटचित्रविवर्जितम् ६८
चित्रं दिनं चलं शैलं चित्रितं चेत्स्थिरं भवेत्
चित्रितां चार्थचित्रं च तथा भासमिति त्रिधा ६९
चित्रं सर्वाङ्गदृष्टं स्याद्दर्भमर्भाङ्गदर्शनम्
निम्नोन्नतत्पहीठेन यत्पटभीमादिकल्पितम् ७०
चित्रहासमिति प्रोक्तं दैविकं मातुषं तथा
कर्मार्चसहितं पूज्य चित्रयुक्तं सदाखिलम् ७१
मण्डलिङ्गं तु वा पीठं रूपदं दर्पणं तु वा
कर्मार्च स्वानुके योज्यं केवलस्थण्डिलं तु वा ७२
मूले बेराच्छ्रयार्थाय द्विहज्या धनवास्मृतम्
उत्तमादि प्रभेदेन नवधा समुदीरितम् ७३
त्रिमात्रादपि पात्रं वा पञ्च पञ्चाङ्गलान्तकम्
पदाद्याष्णीषपर्यन्तं मातः द्वादशधामतः ७४
द्वारार्थं नवधा कृत्वा भागभान्योत्तमादिकम्
नवधामानकद्दिष्टं धामपादार्थमेव वा ७५
आयादि षट्शुभोपेतं अंशैरंगुलिभिस्त्वया
मूलबेराकृतिं श्रेष्ठं कृत्वा बालेन्दुशेखरम् ७६
सोमास्कन्देश्वरं वाथ यजमानेन लब्ध वा
स्वतन्त्रे शुद्धनृत्ताङ्गं नैवेद्यान्तं तथैव रे ७७
स्नानादि नित्यनिर्वृत्य प्रविशेद्वाह्यमण्डलम्
विरुद्धभूतले तत्रे सुखं लीनोपदं मुखः ७८
भूतशुद्धिं पुनः कृत्वा दिव्यदेहं विचिन्त्य च
आप्लास्याम्रतथाराभिरन्तर्यागं विधाय च ७९
स्नानशुद्धिं ततः कुर्यादस्त्रप्राकारकल्पयेत्
कवचेनावकुण्ठाथ वादिको कल्पनादपि ८०

द्रव्याणि शोधयेत्पश्चात् पूजार्थं कल्पितानि तु
सामान्यार्घ्यजले प्रोक्ष्य स्पृशेत्सर्वात्ममन्त्रितः ८१
ततस्तु शोधयेन्मन्त्री ओंकारादि नमोन्तकान्
सकृतार्त्यनादान्ता शुद्धं तत्वसमाश्रयात् ८२
गन्धपुष्पाक्षतोपेतं सामान्यार्घ्यं तु हेति
कल्पयित्वाथ पाद्यादीन् क्रमशः परिकल्पयेत् ८३
हेमरूप्यादके पात्रे शंखवाय त्रिकास्पतेः
क्षालिते हेतिना तोयैः पूरिते त्रितये पुनः ८४
चन्दनोशीरसंयुक्तं पुष्पोदकमथापि वा
पाद्यं संकल्प्य पादाभ्यां सद्योजातेन पावनम् ८५
लवंककुटि कर्पूरं पुष्पजातिफलान्वितम्
मुखेष्वाचमनं धीमान् कल्पयेन्मुखमन्त्रितः ८६
क्षीरतण्डुलसिद्धार्थं कुशाग्रं समनस्थलः
यवेरसहितं चार्घ्यं केवलं गन्धपुष्पयुक् ८७
कल्पितं सहितामन्त्रैः कवचेनावकुण्ठितम्
क्षीरं क्षीरसुनाकारं मुद्रया संप्ररोचयेत् ८८
अथवा वर्धनी पात्रे संकल्प्याचण्डमुद्बुधः
अर्घ्यपात्रादकेनैव प्रोक्षयेद्द्वारकं बुधः ८९
सदाघण्टारवैस्सार्धद्वारपालान् समर्चयेत्
द्वारदक्षिणशाख्यायां ++ गर्भां च वामके ९०
कालं कलंगकन्यां च गणमूर्ध्वे सरस्वतीम्
नन्दी श्यामनिभास्र्यक्षश्चतुर्दे+ दण्डमण्डितः ९१
अभयं सूचिमुद्रां च वामदक्षकरद्वये
वरावृताङ्गुली वामे तदा तोमरमेव वा ९२
काली कुंकुमवर्णाभो नेत्रहस्तं च नन्दिपत्
महद्विर्गपयं दंशयुतं तु क्षकरद्वयम् ९३

भस्मयाभयसंयुक्तं वामपाणितले द्वयम्
जटामकुटसंयुक्तो व्यालयज्ञोपवीतिनौ ९४
दंष्ट्राकरालवदने नदीकालो विचिन्तयेत्
यद्वा द्विभुजयुक्तं चेत् अन्यैः पूर्वोक्तवत्सुधीः ९५
रक्तवर्णं चतुर्बाहुं गजवक्त्रं स्वदन्तधृक्
सलस्सलकुठाराक्षा मालाहसितलोचनम् ९६
वागीशश्वेतवर्णांगा चतुर्हस्ता त्रिलोचनाः
सदंशपुस्तकं चाक्षमालामथकमण्डलम् ९७
धारयन्ति प्रसन्नस्याञ्जटामकुटमण्डिताः
गन्धादिनार्चयेद्द्वारपालान्वेतान्वनामभिः ९८
दिव्यान्तरिक्षभूयिष्ठान् पुष्ठिपुष्पांघ्रिनिग्रहैः
अस्त्रेणोच्चाटयेद्विघ्नान्वामशाखामसारितः ९९
प्रविश्यगर्भगेहं तु विन्यस्यासूनुदुंबरैः
तद्विघ्नोच्चाटनार्थं तु महावर्णां प्रतासयेत् १००
वार्परोपरिमृष्ठानास्तिकप्रतिलोमकैः
अदर्शनार्थतत्काले क्षिपेद्यवनकाद्बुधः १०१
वास्तोष्पतिं च संपूज्य देवदेवस्य पारथः
प्रणम्य दण्डवद्भूमौ पूजां विज्ञाप्य देशिकः १०२
पूर्वसन्ध्यार्चितां पूजां गायत्र्याभ्यर्च्य योमरुत्
ब्रह्मभिर्माल्यमादाय चण्डेशाय निवेदयेत् १०३
आद्यं चेद्धोरमन्त्रेण शोधयेद्दासकादिभिः
शुद्धं कृत्वा तु तद्देवं जलेनार्घ्यं बुना सह १०४
न शून्यमस्तकं देवं कुर्यान्मन्त्री कदाचन
आधाररूपिणं शक्तिं गोक्षीरधवलप्रभाम् १०५
चतुर्भुजं ग्त्रिणेत्रं च पाशांकुशवराभयम्
वेदपद्मासनासीनां ततोनन्दं प्रपूजयेत् १०६

दशबाहुं चतुर्वक्त्रं कुन्देन्दुसदृशप्रभम्
खड्गखेटधनुर्बाणकमराडलसूत्रिणाम् १०७
पराभयकरोपेतं शूलपंकजपाणिनम्
स्रासनाम्बुरुहात्मानं शक्तिबुद्धास्थिसंभवम् १०८
धर्मज्ञानं च वैराग्यमैश्वर्यं चरणानमून्
सीताकाश्मीलताम्बूल चारुं सिह्माकृतिः स्मरेत् १०९
स्रग्निरक्षो मरुत्सर्वा काष्ठासु च विपर्ययात्
पूर्वादिश्चित्रवर्णां श्च गात्रकान् परिकल्पयेत् ११०
स्रत ऊर्ध्वं च ते तत्र रक्तपाराडुरसन्निभे
नैर्ऋतेशानयोर्नस्य नालं ग्रन्थ्यन्तकं स्मरेत् १११
तदूर्ध्वे वदलं पद्मं कर्णिकाकेसरान्वितम्
केसरेषु च वामाद्या सुमकोटिसमप्रभम् ११२
चतुर्भुजास्तथैकस्य पद्मापरभयान्विता
पूर्वपादेकभिमुखः कर्णिकायां मनोन्मनिम् ११३
ज्योत्स्नभावे मराडलीनीकं स्वस्वरूपेण चिन्तयेत्
मराडलाधिपतिं देवान् ब्रह्मविष्णुहरात्मकान् ११४
स्रथोर्ध्वव्यापिनीं शक्तिं पूजयेत्कुटिलात्मकान्
व्याधिशुद्धिं विभान्तं तत्वं व्याप्तं शिवांसनम् ११५
स्नानात्पूजयेद्गन्धपुष्पधूपैर्विचक्षणः
मराडलत्रयसंचातां व्यक्ताव्यक्तस्वरूपिणीम् ११६
मूर्तिमीश्वरत्वाङ्गीमूर्तिमन्त्रैः प्रपूजयेत्
तत्तद्बेरानुसारेण विद्वान् देहं विभावयेत् ११७
ब्रह्मणी ब्रह्मतं श्यातं न्यासाङ्गं स्वस्वदेशिके
मूर्तयो बहुधा शंभोस्तत्तत्कर्मानुसारतः ११८
दृश्यन्ते निष्कलस्यापि साधकानुग्रहे प्रिया
निरोधनं पुरुषेणैव कवचेनावकुराठनम् ११९

अमृतीकरणं पश्चात् मूलमन्त्रेण देशिका
इत्येवं पङ्क्तिसंस्कारसंस्मृतं परमेश्वरम् १२०
उपचारै यथाभावमुपदिष्टेत्समाहितः
सोमास्कन्देश्वरं चेत्तु तयोरावाहनादिकम् १२१
विदध्यात्स्वस्वमन्त्रेण स्वस्वव्यक्तागुरूत्तमाः
ताम्बूलं मुखवासं च भक्तितो हृदयाणुना १२२
रणपूजात्ममध्येषु +++ प्रयत्नतः
स्कन्दोमासहितं देवं मध्येऽभ्यर्च्य समन्ततः १२३
रूशापिटकवं रुद्रमूर्ध्वं नेत्रं कुंकुमवन्नरम्
दक्षिणे जनवद्धोरं साम्येव कुसुमं भवेत् १२४
चन्द्रांशुनिर्मलं सद्यं पश्चिमे तु विचिन्तयेत्
एकवक्त्रा त्रिणेत्राश्च जटामकुटसंयुतम् १२५
हृदयाद्धृदयं श्वेतं आग्नेय्या तु हृदा ततः
शिरसं शिरसैशान्यं शिरसाकनकप्रभम् १२६
नैर्ऋतेयां शिखाङ्गं च चूलिकां शिखरारुणम्
सर्वाङ्गं कवचं कृष्णं वायव्यां कवचेन तु १२७
नेत्रं कपिलवर्णं तु शिवस्थानेन पूजयेत्
पूर्वाद्यादि चतुर्दिक्षु हतिं कालाग्निसन्निभम् १२८
एवमाचरणं यष्ट्वा पुनर्देशप्रपूजयेत्
देविस्कन्दादियुक्तानां ++++++++ १२९
चेराणामयदंगं च सर्वेषानावृतपूजनम्
स्नानं प्रोक्षणं वापि कुर्यान्नित्यार्चना विधौ १३०
नैमित्तिके प्रभो कुर्यात् स्नपनं मराटपादिषु
परिवेष्टक्रमं कृत्वा गेयनृत्तादिसंयुतम् १३१
विशुद्धतैलं भस्मानां तथा दूर्वां कुराक्षतम्
पिष्टं लक्षणं सारं रमन्यामलकादिकम् १३२

वर्णानं चवच्छाद्यं विष्वादिपरिकल्पयेत्
सुगन्धवस्त्रपुष्पाद्यमन्यद्वाङ्गलाहिम १३३
विप्राद्यैर्वाहयित्वा हि शंखकुर्या यवादिभिः
स्नापयेद्योग्यदेशे तु देवदेवादिकं बुधः १३४
संप्रोक्ष्य कैतकं नम्रममृतीकृत्य मुद्रया
नत्वापर्यापकं पश्चात् ताम्बूलमुखवासयुक् १३५
शैलं संस्थाप्य देवाग्रे संप्रोक्ष्याभ्यर्च्य हेतिना
तैलाद्यं वस्त्रभिः पुष्पैः बिन्दुं देवस्य मूर्धनि १३६
दत्वादपादयोर्बाहोमूर्ध्नदूर्वा कुराक्षतैः
पश्चात्पिष्टापनोत्पर्णाद्यन्यल्कसारमदोदकैः १३७
उद्धृत्य देवमूर्धानं अभिषिच्योदकैः शुभैः
रजन्यालेपयेत्पश्चात् पुष्पदानान्तरीकृतिम् १३८
ततो ग्रामार्चनं कुर्यात् देवाग्रस्थापिनैः शनैः
वर्णकैश्च वज्राद्यैः लाजिकास्त्रांत चन्दिना १३९
देवत्वामनेनमीशस्य शुद्धवस्त्रैः प्रमृज्य च
वस्त्रमाभरणं गन्धं माल्यं च धूपदीपकम् १४०
परिवाग्य निवेद्याथ कुर्यादारात्रिकं शुभम्
सप्तपञ्चत्रिपात्रस्थैर्दीपकैः स्थपकैः स्थिरैः १४१
प्रभूतो पिष्ठसंस्थैराजिनीतैश्च द्विजातिभिः
सर्वालंकारसंयुक्तैः देवाग्रे यवा ++++ १४२
विवाथामस्त्रमावाह्य समाप परिवेशितः
मध्यादीशानपर्यन्तं गन्धपुष्पादिपूजितैः १४३
हस्तद्विकेश्वरं ब्रह्ममप्यरुन्धतिवतैः
मुदितैर्रोस्तनेनैव रथसस्यादिमनादिकैः १४४
दत्रेऽथमङ्गले स्तोत्रैराशिताद्यध्वनिर्मितैः
पादतोष्णीषपर्यन्तं पुष्पाणि स तु हेतिना १४५

उच्चैरुच्चैस्तरस्सम्यक् नीचैनीचैस्तरावपि
देवदेवस्य विशाखेन सह भक्तियुतो गुरुः १४६
सोमास्कन्देश्वरं चेत्तु केवलं देवमेव वा
दत्वाचामनार्घ्यं च भादायाभिमन्त्रितम् १४७
अंगुष्ठानामिकाभ्यां तु मथित्वोपधिपोपरि
त्रिः कृत्वा प्रथिपेद्दीपे तस्य विघ्नोपशान्तये १४८
क्षिपेन्मूर्ध्नि ललाटे च गले हृदि तथांशयोः
नाभौ पादद्वयो पृष्ठे ककुद्देशे क्रमाद्बुधः १४९
देव्या ललाटगलयो स्कन्दे देववदाचरेत्
भस्मशेषं ततो दद्यात् चण्डायार्थप्रसादिनाम् १५०
शन्तदीपनि वस्त्राणि वाहयित्वाङ्गनादयः
महापीठाग्रतो वापि तटाके पादवाग्रतः १५१
क्षिपेयुः शंखतूर्याभिः दिनादैर्बहुदीपकैः
श्रीमान् पञ्च महाशब्ददर्पणछत्रचामरैः १५२
गेयनृत्तस्तु तैस्तोत्रैः ददामभिन्दयेत्
प्रभूतं तु हविर्दद्यात् सर्वोपचारसंयुतम् १५३
प्रदापयेत्प्रभूताद्यैः निवेद्यानि पृथक्पृथक्
हेमरूप्यादिपात्रेषु वामादारभ्यपत्रिषु १५४
दध्यन्न पयसादीनि शाकपर्यस्तकानि तु
दद्यादाचमनं चान्ते हस्तोद्वर्तनपूर्वकम् १५५
ताम्बूलमुखवासं च जपं कुर्यात्ततो गुरुः
पूज्या निवेद्य देवाय त्रिप्तवाञ्छेमितं फलम् १५६
अनुक्षमन्यतन्त्रेषु ज्ञात्वा संपूज्यमाचरेत्
एवं नैमित्तिके पुण्यं सर्वदुर्भिक्षनाशनम् १५७
ज्वरग्रहमहामारी प्रमुखातापि नाशनम्
अभ्यंगनादि निर्वाच्या रहिस्थेव वामृता १५८

द्रव्यैथ नीराजनमथ संकल्पनालेपनं च पुष्पं
धूपं च दीपहरविदनहविरमुदं हरेत् १५९
प्रन+++++++मदानां गेथवाद्यसानृतं
तिलकतसुरणमत्रिकान्तेजपञ्चर्मपञ्चना १६०
दिपस्तुति
रथमुकुरं छत्रदर्शनं जपो देवासवस्त तत्
पदयजनयपरि नमस्कारं द्वात्रिंशत् १६१
यते शिवयजनविधौ चोदितास्ते परेश
ज्येष्ठश्च क्वचित् षोडसः दयत्रिवात्रचित्
पञ्चाचा स्युः १६२

इति विजयोत्तरे सूत्रसंग्रहे त्रिसहस्रसंहितायां
सकलाराधनपटलः

शिवोत्सवविधिः पटलः

अथ वक्ष्ये विशेषेण शिवोत्सवविधिक्रमम्
अज्ञानमलसंलग्नात् जन्तूनुद्धृत्य बन्धनात् १
प्रसूतिं कुरुते तेषां ज्ञानस्येत्युत्सवो मतम्
उद्भूतसृष्टिकारित्वाच्चाथ दुःखनिवारणात् २
नित्यो नैमित्तिकः काम्यः त्रिविधस्सतु कीर्तितः
नित्यपूजावसाने तु यः कृतो नित्य उच्यते ३
चैत्रमासादिमासेषु तत्तन्मासादिना विधिः
राज्ञां जन्मान्तनक्षत्राद्यन्तो नैमित्तिको भवेत् ४
प्रार्थितार्थप्रसिध्य्यर्थं कृतकाम्यं विधिर्बुधः
स्वरूपेण तयोर्भेदो यन्नैमितिककाम्ययोः ५
तस्मान्नैमित्तिकोत्तीर्य काम्योत्तरविधा दयेत्
त्रयाणामपि चैतेषां नित्यपूर्वमुदाहृतम् ६

आद्यन्ते परमेशस्य वक्ष्यते नैमित्तिकोत्सवम्
चित्रा विशाखमूलाश्च चोत्तराषाढदिनान्तकम् ७
तथा श्रवणपूषाढ अ ++ नीकृत्तिकान्तिकम्
आर्द्रा पुष्यमधार्क्षान्तमुत्तरान्तमनुक्रमात् ८
प्रकुर्यादुत्सवं प्राज्ञो मेषमासादिषु प्रभो
आर्द्रान्तं सर्वमासेषु ज्येष्ठेषुत्यन्तमेव च ९
राजाभिषेकनिर्याणं त्रिजन्मर्क्षवसानकम्
लोकदेवप्रसं ऋक्षं दीव्यन्तमपि बुद्धिमान् १०
चक्रवर्ति महाराज्ञो यत्र वा रुचते मनः
तद्दिनान्तश्च तल्लिङ्गप्रतिष्ठा भान्तमेव च ११
सौरमासप्रशस्तं स्याच्चान्द्रमासोः प्रशस्तिकाम्
तीर्थर्क्षद्वयसंप्राप्ते एकमासे परं वरम् १२
यत्र योगबलं पूर्णं योगो यद्वानुकूलतः
पूर्वस्मिन्नपि कर्तव्यो द्विस्तानुसादरम् १३
स्नायादत्रमहादेवस्तत्र पर्वप्रधानतः
संवीक्ष्य कल्पयेत्तीर्थं उत्तमसंक्षेपाश्च योऽस्ति च १४
ध्वजारोहस्तथा तीर्थमेकमासे द्वयोस्तु वा
अन्त्यमेतद्दिनं श्रेष्ठं पूर्वं चेत्कर्तृनाशनम् १५
एकत्रिपञ्च सप्ताह नवाहानुदिनेषु च
तथापञ्च दशाहेषु नामान्यत्र यथाक्रमम् १६
शैवं गौणं विभूतिं च भौवनं दैविकं तथा
पैतृकं विजयं चेति भिद्यज्येतेन्द्रिया पुनः १७
पुष्कलं विजयाख्यं च कवचं च क्रमेण तु
निर्दिष्टदिवसात्पूर्वरात्रौ यत्राधिवासनम् १८
भवेद्बिंबोत्सवो यत्र केवलान्नं विनिर्दिशेत्
तदेव भ्रमणीमाहुर्वशात्पक्षोत्सवादिषु १९

ध्वजारोहणपूर्वादिभेदैर्भिन्नास्त्रिधा पुनः
शैवं गौणं विभुं तौच वर्जयेत्केतुरोहणम्  २०
भौवनाद्विजयान्तौ च ध्वजारोहणमारभेत्
तत्रोक्तदिनमात्रे च द्विगुणे द्विगुणे क्रमात्  २१
अंकुरार्पणपूर्वं  च कारयेदुत्सवं सुधीः
ध्वजारोपयित्वाह्नि भेरीं सन्ताड्य तन्निशि  २२
उत्सवस्यादिरात्रौ तु यत्रस्यादंकुरार्पणम्
ध्वजारोहणपूर्वन्तु द्विजानीय विचक्षणः  २३
पूर्वं  निशि समुत्ताड्य भेरीं पश्चात् ध्वजक्रियाम्
कृत्वाङ्कुरार्पणं यत्र कुर्याद्वै पूर्ववन्निशि  २४
भेरीताडनपूर्वं  स्यात् रात्रौ चैवाङ्कुरार्पणम्
ध्वजारोहदिनात्पूर्वाद्यासादर्वाक् शुभे दिने  २५
दारुसंग्रहणं कुर्याद्यथातेरनुकर्मणि
अनुरूर्यशमोपेतं वनमुद्यानमेव च  २६
प्रविश्य पूर्वरात्रौ तु देशिकश्शिल्पिभिस्सह
भूम्यस्त्रेह समायुक्तं चण्डनाथ समन्वितम्  २७
वृक्षं संपूज्य सन्तर्प्य कौतुकं बन्धयेद्धृदा
ततः प्रभाते विमले शूलास्त्रसहितो गुरुः  २८
पूर्ववत्पूजयित्वाथ विसृज्य वनदेवताम्
वृतात्तेन कुठारेण छिद्यामृत्युजितं जपन्  २९
शिल्पिभिः छेदयेत्पश्चात् वास्तुविद्याविशारदैः
पादं विलक्षयेत्तस्य शुभाशुभविभेदतः  ३०
अन्तन्यन्तत्पलाशाम्बु मरुद्दिक्षुं न शोभनः
पातो वनस्पतेः शिष्टं दिक्षु पादसुशोभनः  ३१
देशिकं पूर्वयेत्पूर्वं  वस्त्रहेमाङ्गुलीयकैः
देव आं पूजयेत्पश्चात् ताम्बूलं दापयेज्जनैः  ३२

एवं सश्रिषु वृक्षादीनारोप्य शकटादिके
कर्मशाला निवेश्याथ विन्दधिकरथादिकान् ३३
तद्दिनेषु मुहूर्तेषु कुर्यात्सन्मङ्गलैस्सह
तत्र यानं प्रपादीनां मुहूर्तस्तं भवेशनम् ३४
प्राकारं गोपुरीं शालं मराटपाभ्यन्तरं तथा
परि चारालयं पीठं ऋषभं तच्चतुष्करम् ३५
कारयुक्तसुतापिराडकृतानि सन्निबन्धनम्
तत्साधु धवलं कृत्वा चित्रयेच्चित्रवित्तमैः ३६
यत्रालंकृतलीलार्थं आस्थानं कुरुते विभुः
तत्र विधातव्या मराटपाद्यस्सुशोभताम् ३७
साध्रकोशधृतालिप्यारंखलेखारिताञ्चिताः
वितानवस्त्रोतपत्रेण संयुक्ता दामभूषिता ३८
शुभाभिर्वैजयन्तीभिः उत्पतन्तीं वृता परि
हैमरत्नच्छिदा चित्रदुकूलाम्बरभूषिताः ३९
सपौष्पादेव देवस्य विधातव्या रथादयः
नानाविधानि यन्त्राणि कर्तव्यानि पृथक्पृथक् ४०
अथादिस्तंभानुहुनेन दारुजं ममयं जपेत्
शैलं चेष्टकं चाछ्य नासीकुर्याद्विचक्षणः ४१
अङ्कुराणयर्पयित्वादौ पूर्वोक्तविधिना गुरुः
वृषयागं ततः कुर्यात् शिवं विज्ञाप्य देशिकः ४२
ध्वजारोहणपूर्वेद्युर्निताडादिना वृषम्
अर्चयित्वा शिवाग्रस्थं कौतुकं बन्धयेन वा ४३
शृङ्गे सवृषमन्त्रेण बद्धाग्रे पृष्ठतोऽपि वा
देशे संबाधरिर्मुक्ते शालिभिस्थरिडलैस्तिलैः ४४
तत्र देशानुरोधेन सङ्कल्प्य स्थरिडलद्वयम्
प्रथमं स्थापयेत्केतुं तल्लक्षणमिहोच्यते ४५

दृढलक्षणस्सितस्सूक्ष्मो घटितः पुनकर्तृभिः
लोकैश्चिरध्वजानष्टावपीयद्वा समानयेत् ४६
शिवध्वजाद्दशांशादिलितान्तायविस्तरान्
तद्वाहने युतोपेतान् स्वस्ववर्णानुसारतः ४७
रक्तपीतोऽथवा कृष्णश्रुत्वा वस्वस्सुतपसैः
रसैर्भूतकरैस्सम्यगायतो रोमवाजितः ४८
शोभापेक्षप्रमाणेन कर्तव्यास्तु महाध्वजः
देवादिसर्वदेवानामुत्सवस्थापनादिषु ४९
ध्वजवस्त्रादि सर्वाणि शालिकास्याधिकारितः
तद्वंजजातिकन्याभिः कर्तृतैतन्तुभिः शुभैः ५०
पवित्रारोहणाद्यन्तु कर्म सर्वत्र संस्थितम्
आमामेवम् च षट् सप्त भागे भागेन विस्मृतः ५१
तन्मानसं पूजो वा किञ्च न्यूनाधिकोऽथवा
तदर्धशिखरोपेतस्तद्भागशिखरोपि वा ५२
वेत्रद्वयसमोपेतस्तदग्रे रज्जुयत्रवत्
ध्वजमेवं समारोप्य तन्मध्ये वृषमालिखेत् ५३
द्वारोच्चं नवधा कृत्वा भागभागप्रमाणतः
ज्येष्ठादिकन्यसान्तानि नवमानानि कल्पयेत् ५४
मुखद्वालाभिपर्यन्तं वानं भक्त्वा वृषाङ्गुलैः
कलाकोलकभागादिन्ते सङ्कल्प्य बुद्धिमान् ५५
शिल्पिशास्त्रोक्तमार्गेण स्थितं वा शायितं तु वा
पद्मासनसमारूढा पार्श्वे दीपायथाचितम् ५६
छत्रचामरसंयुक्तं पूर्णकुंभाङ्कुरान्वितम्
स्त्रीशूलास्त्रेण समायुक्तं रहितं स विचक्षणः ५७
शिल्पिना कल्पयित्वैवमाचरेदक्षमोक्षणम्
प्रोक्षितं पुण्यतोयेन स्थापयित्वा शिवांभसा ५८

संप्रोक्ष्य वृषमन्त्रेण गन्धाद्यैरर्चयेद्गुरुः
तदग्रे स्थण्डिलं न्यस्त्वा नवकुंभानलंकृतान् ५९
वृषं लोकेश्वरागुष्टौ मध्यमे परितो यजेत्
तदग्रे स्थण्डिलो होमं समिच्चरुघृतैर्गुरुः ६०
वृषगायत्रिमन्त्रेण शतमध्यार्धमेव वा
हुत्वा तामग्रतो दण्डं स्थापयित्वाधिवासयेत् ६१
++ न् द्वित्रि गुण्डवाथ समं वा शिखरावधिः
नासिकान्तं गुलान्तं वा वृषस्थलसमं तु वा ६२
चतुस्त्रिद्वितलान्तं वा बहुभूमिषु सद्मसु
नवहस्तं समारभ्य यद्वा तिथिकरावधि ६३
वैणवं सारदारूत्थं क्रमुकं वाप्यनिन्दितम्
तत्वाङ्गुलादि भान्वन्तं शुभनाभसमन्वितम् ६४
वैणवं क्रमुकं दण्डं गृह्णीयात्स्वप्रमाणतः
सुरेशभानुनिम्नाङ्गरसवेदसमाङ्गुलैः ६५
आयतारिवियतैस्तारधघमसंयुतैः
दर्वाकारैर्यथायोग्यरन्ध्रैस्कन्धैस्त्रिभिर्युतम् ६६
यथा बलं यथा शोभं दर्व्यनाभान्वितेन च
वैणवाद्युपदण्डे तु यन्त्ररज्वाश्रयेण तु ६७
लोहजेन तु नीलेन कटकेन समन्वितम्
ज्येष्ठाद्यङ्गुलनाहे तु वलयस्थेन रज्जुना ६८
ध्वजारोहक्रियोग्यदैवेन च समन्वितम्
दर्भमालासमायुक्तं प्रोत्थितां चास्त्रतो यतः ६९
गन्धादिभिरथाभ्यर्च्य जयशब्दादिमङ्गलैः
पीठगोपुरयोर्मध्ये वृषगोपुरयोरपि ७०
पीठाग्रे वा वृषाग्रे वा पृष्ठं वाप्युभयोरपि
चतुस्तालप्रमाणेन खात्वाम्रस्सदवर्जिते ७१

तन्मूले हेमजं कूर्मप्रणवेन विनिक्षिपेत्
दण्डं संस्थाप्य यन्त्रेण तन्मूले वेदिकां कुरु ७२
शिलापार्श्वेष्टहोद्धूत यद्वा पक्षेष्टकान्विताः
एकहस्ता त्रिहस्तान्ता त्र्यङ्गुलाध्यासुविस्तृताम् ७३
समद्यष्टाङ्गुला वृद्धा तु सायान्तं पञ्चतोनताम्
उच्चार्धोर्धोन्नतव्यासपञ्चत्रिंशद्वशोभितम् ७४
उच्चाध्यात्वादिरुद्रान्तभागेष्वेकांशमानतः
पतोपानपतीमूले यदि वा मेखलावतीम् ७५
मानाङ्गुलवशात्कुर्यात् मात्राङ्गुलवशेन तु
वेदिं मन्मथसोपाद्य कृत्वा शिल्पिविसर्जनम् ७६
गोमयाल्पेन कृत्वा रजोभिस्तु विचित्रयेत्
शुद्धतोयेन संप्रोक्ष्य पूर्वनिश्यधिवासयेत् ७७
अथवा ध्वजदण्डां तु सद्य एवाधिवासयेत्
एवमेवाधिपस्याथ सर्वालङ्कारसंयुतम् ७८
त्रिशूलेन समायुक्तं दद्याद्ग्रामबलिं न वा
प्रभाते नित्यपूजान्ते ध्वजं पुष्पाद्यलंकृतम्
गन्धादीनां समभ्यर्च्य मुद्गान्नं विनिवेदयेत् ७९
ताम्बूलं मुखवासं च श्रीमत्पञ्चमहाध्वनीम्
आ+तपत्रं च मुकुरं चामरे च प्रदर्शयेत् ८०
कलान्यादि शिवप्रान्तं प्रपञ्चाधाररूपिणम्
शक्तिं ध्यात्वा वृषं साक्षात् देवदेवं च शूलिनम् ८१
समा रोप्य रथे रंगे शिबिकायां रथेषु वा
नानावाद्यसमायुक्तं नानागानैस्समन्वितम् ८२
अस्त्रमूर्तिसमायुक्तदिक्पतिभ्यो बलिं क्षिपेत्
एवं प्रदक्षिणं नीत्वा प्रासादाभ्यन्तरं विशेत् ८३
ध्वजं स्थण्डिलसंयुक्तं ब्रह्मघोषसमन्वितम्

ग्रामप्रदक्षिणं कृत्वा दण्डस्थानं प्रविश्य च ८४
मुहूर्ते देवनिर्मुक्ते यजमानशुभप्रदे
पुण्याहं वाचयित्वा तु प्रोक्षयित्वा तदंभसः ८५
विद्यादेहमयं दण्डं ध्यात्वा गन्धादिभिर्यजेत्
तद्दण्डस्य चतुर्दिक्षु नृत्तगेयरवान्वितम् ८६
रज्जुयन्त्रेण संयोज्य ध्वजं घण्टासमन्वितम्
वृषमन्त्रं समादाय कुंभान् वृषह्रीदीन्यसेत् ८७
गन्धाद्यैरर्चयित्वाथ प्रस्वा ध्यायघोषणैः ८८
ध्वजमारोहयेन्मन्त्री न दूतं न विलम्बितम्
लोकपालघटस्तोयै योजयेद्दण्डमूलता ८९
अस्त्रं संपूज्य गन्धाद्यैः मुद्गान्नं विनिवेद्य च
अमन्त्रये ध्वजं पश्चात् भ्रमणं चेह तत्र च ९०
कार्यं त्वया स्थिरेणापि भोगमोक्षार्थसिद्धये
लोकपालघटस्तोयैः योजयेद्दण्डमूलता ९१
अस्त्रं संपूज्य गन्धाद्यैः मुद्गान्नं विनिवेद्य च
अमन्त्रये ध्वजं पश्चात् भ्रमणं चेह तत्र च ९२
कार्यद्वयास्तिरेणापि भोगमोक्षार्थसिद्धये
प्रासादध्वजमप्यस्मिन् काले चारोपयेत्सुधीः ९३
ध्वजारोहणवेलायां वृषभस्य निवेदितम्
भुक्त्वा चास्यालभेत्पुत्रं ईश्वरांशं न संशयः ९४
यत्रैतत्क्रियते राष्ट्रे ध्वजयष्टिनिवेशनम्
न कालमृत्यु तत्रास्ति नालक्ष्मी पापकृत्स्वपि ९५
स्वकालावतिपर्जन्य सु ++ विजयी नृप
भवानि सहितं देवमारोप्य शिबिकादिसु ९६
ध्वजेन वा तदन्ते वा सर्वमङ्गलसंयुतम्
पुरं प्रदक्षिणं कृत्वा भयेदास्थानमण्टपम् ९७

परिवेषक्रमं कृत्वा सोपचारं यथोचितम्
पुनरस्तंगते भानौ भागं निर्वृत्य नैत्तिकम् ९८
मुहूर्तौ तु मनुप्राप्तभेरीताडनमारभेत्
देवाग्रे वाथलिङ्गाग्रे शलिभिस्तराडुलैस्तिलैः ९९
स्थरिडलद्वितयं कृत्वा गर्भपुष्पाद्यलंकृतम्
एकस्मिन् क्षापयित्वास्त्रं गन्धाद्यैरर्चयेद्गुरुम् १००
तदग्रे स्थापयेद्भेरीलक्षरणोक्तामनिन्दिताम्
अग्रे पृष्ठे यथा सर्वं चामात्मक्रमुकद्वयम् १०१
सौरं चान्द्रं यथा देहं मुखसंकल्प्य तत्र च
पुरायाहं वाचयित्वाथ प्रोक्षयित्वा च तोयतः १०२
नन्दीबीजं न्यसेन्मध्ये सोरश्चान्द्रमुखस्ययोः
संपूज्य गन्धपुष्पाद्यैः नैवेद्यान्तैरुपस्करैः १०३
आमरु यत्ततो मन्त्री नन्दिकेशं सुमन्त्रतः
दुन्दुभिध्वनिना दोषं परमानन्दनादिकः १०४
नन्दीश्वरान्नमस्तुभ्यं त्रिरोत्राय महात्मने
सन्ताड्य हेतिमन्त्रेरा त्रिः कृत्वा प्रथमं गुरुः १०५
आ ++ यं शुद्धं शैवदीक्षासमन्वितम्
संप्रोक्ष्य गन्धतोयेन तत्वतोरुसमं क्षिपेत् १०६
सौख्याचारैर्विदग्धैश्च भेरीगेतोद्यपञ्चभिः
तत्पुष्पं तत्र निक्षिप्य नमस्कृत्वा तु निन्दितम् १०७
वादयेत्सुमुखं भूत्वा वाद्याविद्याविचक्षराः
नर्तको मर्दनश्चैव गायको वंशकस्तथा १०८
तरिडमो रवैकश्चेति पञ्चाचार्य उदाहृताः
पञ्चाचार्यविधौ वर्रा अनुलोमाश्च सर्वतः १०९
नानाविद्यैरथातोद्यैर्भेरीपटहं मद्दलैः
तुमुलो झल्लरीभिश्च सरित्कारीत्तथापरैः ११०

वीणावेणुमृदङ्गैश्च द्वांखकाहलकञ्चलैः
ढक्कं ममाभिर्जयाघण्टाभिरिन्द्रबहुभाषितैः ११९
श्रीमत्पञ्चमहायज्ञे देवश्रुतिसुतिप्रदैः
वादकैश्शान्तस्समतालादितालकान् ११२
चर्मच्छन्नं च सक्तं च धरणं वंशमेव च
गानं चेति विदुः पञ्च महाशब्दा मनीषिणः ११३
क्वचित्तदभिसंज्ञाभिः कीर्तिताः परमेष्ठिनः
ततोदितालगेयं च तत्तद्दिक्पालतृप्तये ११४
गृहिणी समबध्ना च भृङ्गिणीमल्लतालकम्
+++++++++++ नवाख्यो बलितालकम् ११५
नवाख्यो बलितालं चं घोटितालं च ढक्करी
गौटी तुटी वरादी च कुजरी भेरिवस्तथा ११६
देशारिशीर्षत्रयंत इत्येते गानमुच्यते
अन्तालिमेगनागं च कोल्लिकौशिकपञ्चमः ११७
शालको नट्टनागं च तुङ्गनागं च तर्कशम्
ब्रह्मादीशानपर्यन्तं तालकेयाः प्रकीर्तिताः ११८
ततो देवास्समाहूय तदा मन्त्रेण पूर्वकम्
देशिको वाथ तच्छिष्यं संपाद्य बलिसाधनम् ११९
ग्रामप्रदक्षिणं कुर्यात् अस्त्रमूर्तिसमन्वितम्
शुद्धोदनेन साज्येन दिक्पतिभ्यो बलिं क्षिपेत् १२०
दिक्पाला एव येत्सर्वान् त ++ क्षं च विचक्षणाः
भेर्याघोषण चेलाय दद्यास्तु दिवसं निधे १२१
प्राणिनस्सर्वथा तस्मात् न गच्छेयुस्थिचेत्किनः
ततो देवेशकल्याणं सव्यमातीर्थकर्षणम् १२२
तीर्थस्नानं ततो त्येकार्यमारोग्यकांक्षिभिः
चक्रवर्तिमहाराज्ञां नैवायं नियमो भवेत् १२३

पारायत्तात्मन्यमपुंसां पितस्यात्मनाहते
देवेशे यध्वजाराहे भवेनैवान्तरध्वजम् १२४
देवकल्याणवेलाय नृपकल्याणं तथा भवेत्
विघ्नयागदिनादर्वाक् ध्वजारोहदिनोपरि १२५
पक्षवारोत्सवादींश्च नैव कुर्वीत वा सुधीः
ऊर्ध्वं तानपि तत्काले समारब्धे महामुखे १२६
कुंभास्त्रानलक्लृप्तः स्यान्नपृथक् यागयामिनी
यागेश्वरार्चनं होमं तत्तद्द्विगुणमाचरेत् १२७
बिंबोत्सवं ततः कुर्यान्नैव वा कर्तुवाच्छिता
यागार्थमण्टपं कुर्याद्वितानध्वजयादृशम् १२८
तदा त्रिनिखिलं वक्ष्ये सर्वैन्द्रो वाररानिले
कर्ताशयानुरूपेण सोन्यत्रापि समीरिता १२९
कन्यसे मध्यमज्येष्ठस्त्रिविधोऽपि त्रिधा भवेत्
पञ्चम्यो सप्तमैर्हस्तैः यावत्स्त्री सप्त यत्नयः १३०
मानं हितेर्बहिर्मध्येऽभ्यन्तरं भूमिभागतः
तत्र भक्तियथास्तंभा शुद्धाः षट्टारबाधबाः १३१
घनोघोषधीरागश्च काञ्चनं कामरामकौ
सघोषा सर्वरो दक्षा मण्टपा नवमानतः १३२
शैलजं वेष्टके वाथ मृण्मयं यागमन्दिरम्
समार्थं निर्गमं कक्ष्ये गीतो वेद च तोरणम् १३३
चतुर्दिक्षोदको वापि मुखशालाविराजितम्
प्रागाप्य वाहि तद्द्वारं संबोधे तन्दिगन्तरे १३४
समरुतः प्रस्नृचाछाया छन्नप्राङ्गणभूतलम्
सुविभक्ताङ्गसंपूर्णं भद्रं यज्ञनिकेतनम् १३५
कारयेच्छिल्पिविज्ञानकोचिदो नाथशिल्पिना
नाना कारोपभिन्नैर्वा कुण्डैर्नवभिरञ्चितम् १३६

पञ्चभिर्वैकतो वाथ मूर्तिभेदवशोवना
तन्मराडलेरलंकुर्यात् परितो मखमराटपम् १३७
शाभृतिबलारोग्य संज्ञानितादितो न्यसेत्
त्रिकारा स च पञ्चान्तपादपादविवर्धनात् १३८
उत्सेधाय विशालानि सञ्चिन्त्यू नायिकानिव
तोरणानि पयो वृक्ष जातिभेदेन वेकतः १३९
शाखाविस्तारबाहुल्यं अङ्गुलाद्याविडङ्गुलः
अष्टाङ्गुलात्कराभारि शूलशृङ्गारायथोपरि १४०
ऊर्ध्वशाखाललाटस्य मध्यमे तु विनायकम्
तत्सव्ये वामभागे च श्रियं वागीश्वरीमपि १४१
पार्श्वयोः स्वस्तिकं पद्मं उत्पलं वा निवेशयेत्
अभावे पादपानां तु यथालाभप्रमाणतः १४२
आत्मार्थे वा परार्थे वा तोरणानि प्रकल्पयेत्
अष्टमङ्गलसंयुक्तं वज्रायुतसमायुधम् १४३
स्रवन्ती वारिसंपूर्णैस्त्रिपादाधारवर्तिभिः
अज्ञादिविप्लवास्तीर्णवत्र्यै फलविभूषितैः १४४
पूर्णकुंभे प्रतिद्वारं रंभास्तंभैश्च भूषयेत्
भीमेन्द्रायुधबन्धूक कृष्णनीलघनोपमैः १४५
होमाम्भोजनिभेः शार्वध्वजैश्च परिमरािडतम्
सवितारसमादं च संप्रोक्ष्यं च समाचरेत् १४६
मराटपः शांकरं धाम निवृत्यादि कलामयम्
सदाशिवं स्मरेत्साक्षात् पाताकश्शक्तिलक्षितम् १४७
तन्मध्ये वेदिकां कुर्यात् हस्तैर्भक्तिवशेन वा
त्रिचतुः पञ्चहस्तैर्वा तद्विस्तारं त्रिभागतः १४८
एकहस्तसमुत्सेधाः यद्वा मुष्टिसमुन्निताम्
उपवेदिकयोपेता यथाशोभप्रमाणतः १४९

दर्वणोदरवश्शुद्धां सृणान्तं तद्वदेव तु
कुण्डानि परितः कुर्यात् नवपञ्चैकभेदतः १५०
वेदी यो शशाङ्कार्ध त्र्यश्रवृत्तानि पञ्चसु
षडश्राब्जाष्टकोणानि दिक्षुन्यासं प्रकल्पयेत् १५१
वर्तुलं नवमं मध्ये वारुणां वृषांकयोः
सर्वत्र चतुरश्राणि भवेयुर्वर्तुलानि च १५२
चतुरश्रमयैकं चेत् वर्तुलं पद्ममेव वा
बहिरङ्गुष्ठका भूत्वा च स्त्रीद्व्यङ्गुलाः क्रमात् १५३
ऊर्ध्वतो मेखलास्तिस्त्रो यदिवेकाषडङ्गुलाः
उत्तराभिमुखान्तेषु नागिनर्कनलागिषु १५४
पूर्वाननास्तृतीयेषु यथाशोभं समुन्नतः
वेदितोरणकुण्डानां षस्य वादि प्रभेदतः १५५
मानं मानाङ्गुलैर्मात्रं गुलैर्वा कल्पयेद्गुरुः
इत्थं विनिर्मिते तत्र कृत्वा शिल्पिविसर्जनं १५६
गोमयालेपिते वास्तु होमकर्मसमञ्चिते
पुण्याहप्रोक्षणोपेते विशुद्धे मखमण्टपे १५७
शैवादि विजयान्तानामुत्सवं विजयात्मकम्
कर्तुरिच्छेद्यथा यत्र ध्वजारोहनो मितः १५८
द्वादशेऽहनि विघ्नोत्थमर्चयित्वा यथाविधि
नानाविधेपहरणी निवेद्य प्रार्थयेद्गुरुः १५९
भगवन् मादिशशिवा स्याहममहोत्सवः
प्रवर्तितपृथात्वन्तं विघ्नं तव सन्निधौ १६०
एवं संप्रार्थ्य विघ्नेशं सर्वमङ्गलसंयुतम्
ग्रामं प्रदक्षिणीकृत्य प्रविश्य भगवन्ततः १६१
कौतुकं बन्धयेत्सोमं यद्वा सोमार्धधारिणम्
उत्पातयैकं वायैकं वानैकं कर्तृवाञ्छया १६२

चाराद्यैस्संकुले राष्ट्रे शूलास्त्रं केवलं तु वा
संस्नाप्य देवदेवेशं शुक्लाम्बरविभूषितम् १६३
शुक्लोत्तरीयसंमाल्या मराटपादावलंकृते
स्थापयित्वाथ तस्याग्रे स्थरिाडलेशालिनिर्मिते १६४
हेमरौप्यादिपात्राणि तराडुलैश्च प्रपूजयेत्
त्रिपाद्युपरि विन्यस्य तदूर्ध्वे कौतुकं न्यसेत् १६५
सौवर्णं रजतं वापि क्षौमकार्पासतन्तुजम्
निष्कमर्धतदर्धं वा पञ्चतिसरजं तु वा १६६
भस्मताम्बूलपूर्वं स्यात् पुरायाहं वाचयेद्द्विजान्
गन्धादिभिर्हृदाभ्यर्च्य देशिको मन्त्रविग्रहः १६७
सोष्णीषः सोत्तरास्स + कुराडलाद्यैरलंकृतम्
ताम्बूलं पुष्कलं दद्यात् केवं सेवाद्यतां नृणाम् १६८
मुहूर्ते समनुप्राप्ते त्र्यंबकेन तु मन्त्रतः
तद्भस्मन्यासमालभ्य ध्यात्वा तत्फणिमकंकणम् १६९
देवस्य दक्षिणे हस्ते बन्धयेत्कौतुकं हृदा
ध्यात्वा चन्द्रकलारूपं देव्या सव्ये कराम्बुजे १७०
स्कन्दनन्दीशचराडेश यदि तत्पार्श्ववर्तिनः
तेषामपि करे सव्ये सन्धये स्वस्वमन्त्रतः १७१
भस्मनापि कलां दद्यात् रक्षोघ्नालौकिकं विभो
तत्र विशिष्टा तद्भस्म भक्तितो भक्तिं नयन्ति यौ १७२
नन्दयन्ति पितृन्सर्वान् मन्दक्रियमलत्रयम्
सर्वमङ्गलसंयुक्तं अस्त्रलोकेशहेतिभिः १७३
नये दन्तेथ देवेशमपि नो वा मलत्रयम्
सकृतं पुरायतोयैश्च गव्यैर्गन्धोदकैरपि १७४
प्रोक्षयित्वास्त्रमन्त्रेण समन्ताद्यागमन्दिरम्
संपूज्यद्वारशाखासु दद्यादि द्वारपालकान् १७५

प्रविश्यान्तरथैशान्य कृत्वा स्थरिडलमुत्तमम्
तदूर्ध्वे विन्यसेदस्त्रं लोके शास्त्रसमद्भूतम् १७६
संपूज्य गन्धपुष्पाद्यैहविरन्तैरुपस्करैः
शिवाग्निं कल्पयित्वैन्द्रैः त्वीशेन मध्यमेथवा १७७
सर्वमूर्तात्मकं ध्यात्वा तर्पयेत्समिदादिभिः
पालाशसमिदाज्यान्तं लाजानथ तिलानपि १७८
सिद्धार्थं तस्य राजानं शिवेनाङ्गैरनुक्रमात्
हुत्वा तदन्ते ताम्बूलं पूर्णमन्ते विधाय च १७९
ततोन्तर्बलिदानं ते रोधयित्वा युवानलम्
आदित्य नलिसामग्री दद्याद्ग्रामबलिं पुनः १८०
ब्रह्मादीशान्तकं यत्र द्वादशाः शंकरावपि
बहुविधियुते ग्रामे मध्ये वा तद्बहिरस्तु वा १८१
कर्तव्यस्तु विचारेण यथायोगं बलिं क्रमात्
चतुष्पथेषु परितावलिकार्करि दरिडके १८२
केवलैः दराडकैः पूर्वो दीशानान्तं यथाविधि
तत्तद्दिनाथ एथानां मुक्तद्रव्येण मन्त्रवित् १८३
द्रव्यास्त्रं लोकपालास्त्रमन्नलिङ्गसमन्वितम्
समारोप्य रथेऽन्यस्मिन् पञ्चाद्यैस्समलंकृतम् १८४
बलिवाद्यसमुद्घोषैः सुरेतरभयंकरैः
ग्रामप्रदक्षिणं कृत्वा क्षिपेद्भूतबलिं क्रमात् १८५
शुद्धोदनेन साज्येन दधिकान्नेन वा गुरुः
ततो ग्रामबलिं दद्यात् तदन्ते नः प्रविश्य च १८६
महापीठे बलिं दद्यात् तदन्तेन प्रविश्य च
++++++++++++++ यक्षादि स्वस्वमन्त्रतः १८७
अन्नलिङ्ग विसृज्यास्त्रं सावृतीन् सर्वविन्यसेत्
एवं दत्वा बलिं प्रातः काले सायान्तनेऽपि वा १८८

तदन्ते कारयेद्देवं ग्रामादिषु महोत्सवम्
नानाविधमहारत्नरक्तहेमाम्बरादिकम् १८९
दुकूलपट्टकार्पास सद्वस्त्रैरावृतं बहु
दिव्यरत्नमयाकालैर्मण्डितं मकुटादिभिः १९०
अपरित्यक्तसौरभ्य नानास्त्रक्दामभूषितम्
ललाटलोचनालोकनिरस्तनिरवासुरम् १९१
दक्षिणोपादं गदानात्तमनोरथमहाजनम्
गौरीमुखांबुजासक्तवामाक्षि भ्रमरं हरम् १९२
बोधयन्तमिवादित्यमहनिद्रावशंगतान्
अशेषाः प्राणिनः पद्मकुड्मलानिव भास्करः १९३
शिबिकादौ समानीय वेदादोद्यखान्वितम्
आतपत्रेण शुभ्रेण हेमदण्डेन चोपरि १९४
निरस्तत्प्रभाजालं विन्ध्यमानं चचामरैः
नानापरिकरोपेतं राज्ञामिव महाजनाम् १९५
अग्रतो नम्यमानाभिरस्परोभिरकृन्तकम्
हिरण्यकांसि वासांसि पक्षयन्तं तदस्थिषु १९६
जयदेवेदिसंसाद्रि शाब्दसन्दभगभीतैः
निमभ्रेदैस्सभक्तिश्चर्वाकासीमतमनोबुधैः १९७
आनन्दितजनाकीर्णं प्रयुक्तस्तोत्रसंविदैः
नीलनीररुहच्छाया तस्करैरायतेक्षणैः १९८
देवस्योपमुतेरपौरैच्यमानं विकासिभिः
क्वचित्सोन्तिमके शैवे क्वचिद्भैरवतान्त्रिकैः १९९
वामस्थैर्गुलमार्गस्थैः विततन्त्रार्थवेदिभिः
गारुसैरिति मार्गज्ञैः क्वचिदध्यात्मवादिभिः २००
वैदिकैर्लौकिकैरन्यैः परलोकात्मवादिभिः
स्वस्वसिद्धान्तमार्गेण स्तवानैश्चानुसेवितम् २०१

कामकायानुकालातत्रिपुरध्वंसनादिभिः
नानाविधपिशाचैश्च सूयमानं पराक्रमम्  २०२
संसारभागरोद्धारपौरभूतपुरोगसाम्
वालुकाविलसाध्वस्तशिखाशोधितभूतलम्  २०३
चन्दनक्षेधसौगन्धिकोत्पलो मिश्रवारिभिः
जलदैरिच संसिक्तसर्वमङ्गलविक्रमाम्  २०४
ध्वजसृक्दर्भमालाभिराकीर्णभवनाखिलम्
ग्राबन्धकिंकिणीमालासमुत्क्षिप्तमहाध्वजम्  २०५
सः पूगकदलीस्तंभबन्धकाञ्चनतोरणम्
दीपांकुरोभकुंभाद्यैः प्रतिद्वारं विभूषितम्  २०६
समन्तादुचमुद्धापगन्धादिकृतदिङ्मुखम्
दिव्यपानीयताम्बूलमुखवासाननुक्रमात्  २०७
तत्तत्कालोचिताचारैर्देवाय प्रतिचत्वरम्
सन्ध्यामाराध्य तत्काले भूयो भूयो निवेदयेत्  २०८
वास्तु प्रदक्षिणं कुर्यात् सोमसोमार्धमूर्धजम्
यस्मिन् पुरा पुरा दातु यदि मात्रा करोति च  २०९
बिम्बोत्सवं च तत्रैव कारयेत्तत्र वित्तमः
विप्रकृष्टमधिष्ठानं नुद्याद्यन्तरितं यदि  २१०
तदन्यत्राप्यधिष्ठाने न दोषाय महोत्सवम्
तुषाराचारचोराद्यैः संबाधे तत्र वास्तुनि  २११
बलियात्रविधिं कृत्वा शान्तिहोमं समाचरेत्
तदन्ते तावदेवेशं नयेदास्थानमण्टपम्  २१२
भद्रं पीठे समासीने देवदेवं जगत्पतिम्
मण्टपे वाथ रङ्गे वा प्रपाद्ये वा मनोहरे  २१३
दुकूलाम्बरपुष्पादिवितानाद्यैरलङ्कृतम्
परिवेषं समासाद्य तत्रोक्तविधिपूर्वकम्  २१४

पाद्यमाचमनं चार्घ्यं दत्वा देवाय पूर्ववत्
उपचारैर्यथायोगमुपतिष्ठेत्समाहितः २१५
होमा भरणवस्त्रादिकर्मकारालये भुवे
सायं प्रातर्यथाशक्त्या स्नपनं शान्तिहोमकम् २१६
नृत्तवादित्रगीताद्यैरथकालं विलम्बयेत्
एवं दिनानि चत्वारि नीत्वा पञ्चमवासरे २१७
सत्कटे वोह्यमाने वा केदारे वा मनोहरे
सर्वालंकारसंयुक्तं प्रापयित्वा महेश्वरम् २१८
प्राङ्मुखस्सागता भूमिं न ज्ञामाहर्तुमीप्सिताम्
तत्तत्पदे यजेद्भूमिं च्यत्वा पूर्वोक्तविग्रहम् २१९
पृथ्विबीजेन गन्धाद्यैर्भूमिक्मामन्त्रयेत्ततः
ओं भवसुगन्धरे भद्रे सर्वभूताश्रये स्थिते २२०
सर्वकामप्रदे देवि नृपते ++ चला भव
एवमभ्यर्च्य गन्धाद्यैः देवीमामन्त्रयेत्ततः २२१
भूपतिर्विजयी भूयात् भूमिस्संवर्धतामपि
तज्जनास्सुखिनस्सर्वे भूयासं चोत्तरोत्तरम् २२२
आहरेदिष्टकोष्ठस्थां भूमिं तत्पासुरूपिणीम्
हेमरूप्यादिपात्रेषु तद्बीजेन गुरूत्तमः २२३
इत्यादाने नृपश्रेष्ठमाहरिष्यति भूतलम्
परमेशविशेषोयं गाधस्य विजयात्मनः २२४
मृत्संगृहेङ्कुरार्थं च विधिरेषः सनातनः
तृतीये दिवसे वास्त्रमूर्तिं चण्डसमन्वितम् २२५
सौवर्णाद्यङ्कुराधारेरग्रतं समलंकृतैः
नार्यमानैर्महेशांशैः वेरूष्णीषधारिभिः २२६
वास्तुं प्रदक्षिणीकृत्य नित्योद्वानादिकां शुचिः
संप्रोक्ष्य हेतिना भूमिं खात्वा कुन्दालतामृतम् २२७

गृहीत्वा भवनं नीत्वा याति चास्तंगते सति
कृत्वाङ्कुरार्पणं पूर्वविधिना देशिकोत्तमम् २२८
सुमुहूर्ते शुभे लग्ने विस्तीर्णयागमारभेत्
अलब्धा विधिसामग्रीमस्त्रयागमहोत्सवे २२९
अनर्च्यास्त्रमहाघोरं को वा शत्रुं जयिष्यति
अमोघेनास्त्रयागेन नृपास्त्रस्याप्यमोघतः २३०
मूलध्वजाः चतुःपञ्च षडंशो न प्रमाणकम्
यद्वा त +++ दिक्पालहेतिवाहनलक्षितम् २३१
सतं ताम्बूलहर्म्यादि दिक्ष्वष्टासुध्वजाष्टकम्
अन्तर्हाराङ्कणे मध्ये हारस्यादिभित्तिके २३२
अष्टौ दण्डन्यसेत्प्रोक्तास्तेऽपि मूलप्रमाणतः
चतुष्पञ्चविधंशे तत्पीठं तथैव च २३३
स्कन्धोपदण्डरज्वादीन् यथाहं परिकल्पयेत्
प्रासादाभिमुखान् केतु तत्तद्दिक्पालमन्त्रतः २३४
आरोप्य पूर्ववन्मन्त्री गन्धाद्यैरर्चयेत्ततः
दिक्पालवर्णमन्नं वा शुद्धान्नं वा निवेदयेत् २३५
ततो यागगृहं प्राप्य द्वारपूजादिकां चरेत्
तोरणानि घटान्यष्टौ न्यस्त्वा पूर्वादितः क्रमात् २३६
चतुर्दिक्षूत्तमाङ्गेषु विघ्नेशं भारतं श्रियम्
नन्दिं कालं यजेत्पूर्वं धाभ्यभृंगिविनायकौ २३७
वारुणे वृषभस्कन्दौ देविचण्डौ यथोत्तरे
स्वाभिधानैश्चतुर्थ्यन्ते नान्यं तैः प्रणवादिभिः २३८
ततस्तोरणशाखासु तद्भावैस्सह पूजयेत्
निधिनष्टौ यथा प्रोक्तं प्रशान्तशिशिरो ततः २३९
पर्जन्याशोन्नामानौ भूसञ्जिवनतामृतौ
धनश्रीदौ च कुंभेषु प्रणवेषु हृदा तथा २४०

कृत्वा त्रिविधविज्ञानमराटपादपसारयन्
विशेत्पश्चाद्यमार्गेण वामपादपुरस्सरम् २४१
प्रदक्षिण भ्रमेणाब्जमराडलस्थानदक्षिणे
स्थित्वोत्तराननो यज्ञद्रव्याणि शुभलोकयन् २४२
भद्रपीठे समासीने स्तत्वदृष्ट्या समाहितः
प्राकृतं तनुमुत्सृज्य शैवमापाद्य शंबरैः २४३
इष्टा हुत्वा समाधाय शिवं हिन्ना हि बिन्दुषु
कृत्वाव्यपात्रं तद्द्रव्यैः कर्महस्तं विधाय च २४४
संहृत्य तानथैशान्यां वर्धन्या धारकल्पने
अहं गन्धपनीयैः संप्रोक्ष्य मघमराटपम् २४५
ईशान्यं स्थरिडले कुंभं शिवार्घ्यं विकिरोपरि
न्यस्त्वा पश्चिमदिङ्नालावर्धनीमपि देशिकः २४६
विधानसूत्रतत्कूर्चं फलपल्लवसंयुतम्
सहेमपुष्पं कुंभायाः पूजयेत्तज्ञलासनम् २४७
मूर्तिं च देवं संगं च मन्त्रिगन्तादिभिर्यजेत्
वर्धन्यां सिंह संस्थायां न्यसेत्पाशुपतास्त्रकम् २४८
इन्द्रादिघटसंस्थेषु लोकपालाश्च सायुधान्
वर्धनीसोम्यमादाय घटपृष्ठानुगामिनीम् २४९
वर्धनीधारया युक्तशिवकुंभं परिभ्रमेत्
शिवाज्ञां श्रावयन् लोकपालेभ्यो यागरक्षणे २५०
संस्थाप्य कुंभवर्धन्यो यजेद्देवं स्थिरादसम्
वर्धन्या संयजेत्पश्चात् स्थरिडलं वेदिकोपरि २५१
शालिभिर्विमलैरर्धस्तद्दलैः स्थिलैः
लाजदर्भैः प्रकल्प्याथ पञ्चाद्यैरेकवृद्धिदः २५२
तत्वान्तरस्य रव्येस्तन्मध्ये नलिनं सम्यगालिखेत्
मध्यमे विन्यसेत्कुंभं शिवाख्यं वर्धनीं तथा २५३

उत्तरे नालनं युक्तं विद्येश्वरघटानपि
सत्सूत्रवेष्टनोपेतान् सापिधानान् सकूर्चकान्  २५४
खारिद्रोणप्रमाणैश्च शिवकुंभादिकान् क्रमात्
नवरत्नं शिवाख्ये तु वर्धन्यां पञ्चरक्तकम्  २५५
अभावे पञ्चरक्तं वा वर्धन्यां हेम निक्षिपेत्
विद्येश्वरघटेष्वेवं हेमपुष्पाणि विन्यसेत्  २५६
र्शन्नभागे गुरुर्होमपुष्पं शिवघटे न्यसेत्
शिवाख्ये वस्त्रयुग्मं च वर्धन्यामेकवस्त्रकम्  २५७
अन्येष्वेकैव वस्त्रं च लोकपालघटेष्वपि
एवं संपाद्य सर्वं तु देवेशं संप्रपूजयेत्  २५८
विशेषस्नपनोपेतं विशेषयतनान्वितम्
प्रभूतं च विषोपेतं ताम्बूलादिसमन्वितम्  २५९
ततो विस्तीर्णयागार्थं सोमास्कन्देश्वरादिके
विशेषस्नपनोपेतं प्राग्वत्कौतुकमाचरेत्  २६०
ततो मण्टपमासाद्य देवेशसहितं तु वा
शिवकुंभं यजेद्देवं साधनं च समूर्तिकम्  २६१
साङ्गं मनोन्मनीं देवीं वर्धन्या संप्रपूजयेत्
यजेद्विश्वेश्वराप्रोक्तनिशानान्तघटेष्वपि  २६२
दर्पणादौ क्रमादर्के जलादेक्षुपदागिदीन्
श्रियं सरस्वतीं दुर्गामर्चयन्तं यजेद्गुरुम्  २६३
प्राग्वत्संकृत्य कुण्डान्त्यं शिवाग्निं मन्त्रकल्पयेत्
नवधा पञ्चधा कृत्वा स्वस्वकुण्डे स्वदिग्गतम्  २६४
तस्याग्निं मध्यमांशे तु शिवं सांगं च तर्पयेत्
द्रव्यैः पूर्वोदितैरेवं शतमष्टोत्तरं गुरुम्  २६५
जुहुयात्स्वस्वमन्त्रेण शिवार्धेन मूर्तिपाः
अन्ते तु जुहुयात्पूर्णां तां प्रभृतीनपि  २६६

हेमान्ते तु हविर्दद्यात् होमादौ वा विचक्षणः
सर्वादि तत्र नृत्तं च सर्वालंकारसंयुतम्  २६७
ऋग्यजुस्सधनं मन्त्रजपं स्तोत्रजपं तथा
चतुर्दिक्षु प्रकर्तव्या दद्यादन्तर्बलिं ततः  २६८
दद्याच्चन्दनताम्बूलान् जनेभ्यो गुरुपूर्वकम्
तदन्ते बलिदानं स्यात्तद्विधानमिहोच्यते  २६९
नवान्नलिङ्गकं कुर्यात् दधिमिश्रहविर्मयम्
प्राग्वत्प्रधानं तद्बाहुपतात्रिं गन्धपुष्पकैः  २७०
लोकपालादिकान्येषु अन्नलिङ्गेषु पूजयेत्
तन्तस्त्रीशूलसंयुक्तं दशायुधसमन्वितम्  २७१
वृषादि परिचाराणां बलिं दद्याद्ध्व्यजावधि
प्रविश्य नगराद्यन्तु देवतार्चनदेशके  २७२
बलिं दद्यात्क्रमेणैव देशिकः शिष्य एव च
गुलपूपादिभक्ष्यं च प्रथमे हि गणेश्वरम्  २७३
पायसं पद्मपुष्पं च ब्रह्मप्रियद्वियके
तृतीये कृसरान्नं तु भूतानां सघृतं बलिम्  २७४
चतुर्थे रात्रौ चूर्णान्नं गन्धर्वानां घृतान्वितम्
पञ्चमे प्रियं यन्नं साज्यमिन्द्रप्रियार्थकम्  २७५
वेणयन्नं दधि ऋषीणां षष्ठमेऽहनि +++
गुलान्नं घृतसंयुक्तं +++ दद्यात्तु सप्तमे  २७६
अष्टमे राक्षसानां तु माषान्नं तु घृतान्वितम्
शुद्धान्नं दधिसंयुक्तं शिवस्य नवमे हनि  २७७
ब्रह्मस्थानादि देशेषु द्रव्यैरेतैर्बलिं क्षिपेत्
सर्वेषां दिनदेवानां शुद्धान्नेन बलिस्तु वा  २७८
ततो लोकेशतृप्त्यर्थं शुद्धान्नं दधिसंयुतम्
बलिं दद्यात्स्वमन्त्रेण प्रासादं संप्रविश्य च  २७९

बलिपीठे बलिं क्षिप्ते वसेत्सर्वान्नलिङ्गकम्
सप्ताहे वाथ पञ्चाहे त्रिदिनो व्योमरात्रिके २८०
बेरयात्रा भवेत्प्राग्वत् प्रदीपबहुलान्वितम्
पूर्वोक्तसर्वालङ्कारसर्वमङ्गलसंयुतम् २८१
एवं प्रदक्षिणीकृत्य प्रविश्यास्थानमण्टपम्
परिवेषक्रमं नीत्वा यथायोग्यसमन्वितम् २८२
दत्वापाद्यादिकं धूपदीपं भस्म च दापयेत्
एवं प्रतिदिनं सायमुषश्चाह्नि विधिक्रमम् २८३
द्वितीयदिनमारभ्य प्रातस्थायान्तरेऽपि वा
त्रिपुरघ्नादिदेवानां यानं कुर्याद्विशेषतः २८४
तेषां तत्पूर्वरात्रौ तु कृत्वा कौतुकबन्धनम्
यानान्ते स्नपनं कार्यं हविर्दत्वा प्रवेशयेत् २८५
तृतीयं दिनमारभ्य उत्सवश्चन्द्रशेखरम्
चतुर्थदिनमारभ्य उमास्कन्दोत्सवं भवेत् २८६
पञ्चमं दिनमारभ्य वृषेश्वरमथाचरेत्
षष्ठमं दिनमारभ्य अर्धनारीश्वरं तथा २८७
पूर्वरात्रौ तु कं सर्व ++++ देवताम्
चतुर्थे पञ्चमे षष्ठे कुंकुमागरुकर्दमम् २८८
चन्दनं च क्रमेणैव समालिप्य विशेषतः
अलंकृत्य च देवेशं यानं तैलं कृत्वा समाचरेत् २८९
सप्तमेह्नि निशायान्ते तैलाभ्यंगं समाचरेत्
देवाग्रे तण्डुलं धार्यतैलं तत्तु परिन्यसेत् २९०
प्रोक्ष्यार्घ्येण च तन्मन्त्रसंहिता मनुना लभेत्
अवकुण्ठ्य तनुत्रेण हृदा गन्धादिभिर्यजेत् २९१
दन्तकाष्ठं च ताम्बूलं दत्वा दर्शनकं हृदा
तैलं शिवाणुना देव कृत्वादौ दापयेद्गुरुः २९२

देव्यादि दन्तकाष्ठादि क्रमेणैव तु दापयेत्
नन्दी चण्डेश्वरादीनां दापयेत्तु पृथक्पृथक् २९३
तैलताम्बूलसहितौ जनेभ्यो गुरुपूर्वकम्
प्रदद्याद्देवदेवेशं स्नपनाद्यं विधाय च २९४
तत्तदन्ते समानीयात् कल्पितं यागमण्टपे
देवं संस्नाप्य संपूज्य विनोदालोकनं नयेत् २९५
ग्रामप्रदक्षिणं कृत्वा भवनं संप्रपूजयेत्
अष्टमेहनिदेवेशमृगयात्रार्थमानयेत् २९६
युद्धारंभक्रियोपेतं नागवाजिसमन्वितम्
पुनश्चण्डेश्वरोपेतं मृगयात्रां समाचरेत् २९७
मृगयात्रावसाने तु देशेशं स्नपनादिभिः
विधाय विधिना पुनस्सायन्तनक्रिया २९८
तदात्रावपि नृत्तेशं स्नापयित्वा विचक्षणः
सितवक्त्रादिभिर्देवं अलंकृत्य विशेषतः २९९
धूपदीपादिकं दत्वा कौतुकं बन्धयेत्ततः
प्रागुक्तविधिना तत्र सर्वमङ्गलसंयुतम् ३००
प्रभूतहविषं दद्यात् अपूपादिसमन्वितम्
शिबिकायां समारोप्य सर्वालंकारसंयुतम् ३०१
नानादीपसमायुक्तं प्रदक्षिणवशं नयेत्
आस्थानमण्टपे तत्र नृत्ताद्यैर्जागरं नयेत् ३०२
ततः प्रभाते नृत्तेशमर्घ्यगन्धविधिर्गुरुः
सहस्त्रं वा तदर्धं वा अष्टोत्तरशतं तु वा ३०३
ऊनमेकं तु पञ्चाशत् अथवा पञ्चविंशतिः
अग्न्याधानादिकं सर्वं अग्निकार्योक्तमार्गतः ३०४
प्रायश्चित्तं तु विधिना अन्ते पूज्याहुतिं हुनेत्
स्नापयेत्कल्शं पश्चात् शस्त्रमाच्छादनं परम् ३०५

नानाहरणसंयुक्तं नानामालासमन्वितम्
अलंकृत्य ततो दद्यात् धूपनैवेद्यकादिकम्  ३०६
तत्पार्श्वे स्थण्डिलं कृत्वा पात्राग्निं यक्षकर्दमम्
कर्पूरादिसमायुक्तं स्थण्डिलोपरि विन्यसेत्  ३०७
संप्रोक्षं हेतिनामन्त्र्यस्सहिता हि समालभेत्
गन्धादिभिर्हृदाभ्यर्च्य कवचेनैव कुण्ठयेत्  ३०८
तदग्रे स्थण्डिलं कुर्यात् शिवाग्निं विधिवद्गुरुः
समिदाज्येन चरुणा हुत्वा मूलाणुनाशतम्  ३०९
तद्भूतये तदंशेन अंगानामाहुतिर्भवेत्
अन्ते पूर्णाहुतिं कुर्यात् शिवाग्निं च विसर्जयेत्  ३१०
पात्रस्थं तत्समादाय नृत्तेशे मूलमन्त्रतः
भावाद्रथाङ्गमालिप्य देवीनां दापयेद्गुरुः  ३११
गततो भक्तजनैर्यश्च दापयेद्यक्षकर्दमम्
सवत्साङ्गा सुवर्णं च तण्डुलं लवणं तिलम्  ३१२
सर्पिस्तैलं क्रमेणैव क्रमादाचार्यदृप्तये
जलप्रदानसंयुक्तं यात्रादानमिति स्मृतम्  ३१३
सर्वालंकारसंयुक्तं मुखेण समन्वितम्
स्थानाचार्यसमोपेतं आरोप्य शिबिकोत्तमे  ३१४
पञ्चप्राकारमध्ये वा तद्बाह्ये वा प्रदक्षिणम्
कृत्वा यानक्रमं प्रोक्तं योग्यमङ्गलसंयुतम्  ३१५
प्रविश्य मण्टपं पश्चात् परिवेषक्रमं नयेत्
तदा पाद्यादिकं दत्वा चन्दनादिसमन्वितम्  ३१६
नालिकेरजलाद्यन्तु दत्वा आचमनं पुनः
अग्रतः प्रकीर्याथ दूर्वापुष्पाक्षतादिकम्  ३१७
धूपदीपादिकं दत्वा सर्वालंकारसंयुतम्
विनोददर्शनोपेतं ततः संस्नापयेच्छिवम्  ३१८

कौतुकं च विसृज्याथ गुरवे तत्प्रदापयेत्
विशेषस्नपनोपेतं गन्धाद्यैः संप्रपूजितः ३१९
प्रभूतहविषोपेतं ताम्बूलं संप्रदापयेत्
++++++++++++ यानं समाचरेत् ३२०
सायाह्ने समये देवं अलंकृत्य विशेषतः
यानं तदकरो कुर्यात् पूर्व +++ दन्तिके ३२१
नीराञ्जनं ततः प्रायात् प्रकुर्यान्मङ्गलैस्सह
रात्र्यन्ते तु समारोप्य ++++ वेशं प्रवेशयेत् ३२२
महानसे तथा यागमराटपे समलंकृतम्
निवेद्य दैवं तत्रैव लाजे पाद्यहोमभृतिं सदापयेत् ३२३
द्विजं प्रविश्य संपश्चात् स्नपनादिक्रमाच्चरेत्
तद्रात्रौ ++++++++++++++++++ ३२४
तद्दिनस्योदयात्पूर्व गत्वा चैवं जलाशयम्
+++++++++++++++++ हणं गुरुः ३२५
हे देवि गंगे यमुने नर्मदे च सरस्वति
सिन्धो गोदावरि त्वंच कावेरिसन्निधिर्भवेत् ३२६
इति रूर्ध्वं रवेरस्तमनं नयेत्तु दीक्षिताम्
पापशुद्ध्यै च तन्मध्ये त्रिशूल ++++ ३२७
++++++ पश्चात् शिवमन्त्रमनुस्मरन्
वाच्यं तु क +++ तीर्थं प्रकुर्याद्देशिकोत्तमः ३२८
दशमे हनि होमान्ते पूर्णोत्सवमथाचरेत्
गोमयालेपनं नीत्वा तत्पुरस्थरिडलद्वयम् ३२९
एकत्र शूलमन्यत्र लूखलं मुसलं नयेत्
न्यस्त्वा दूर्वाक्षतं तैलं ताम्बूलं बहुलं तथा ३३०
उलूखले रात्रिपूर्णं तु निक्षिप्य तदनन्तरम्
पूजयेद्देवदेवेशं वाद्याद्यैर्धूपचारितम् ३३१

दूर्वाङ्कुराक्षताद्यैस्तु कुर्याद्धृतशिरोर्पणम्
शिवतत्वादितो वात्मा तत्वादीनामथापि वा  ३३२
समुखं वापि देव्यां शूलं तथामतथम्
मुसलेलूखलेत्वीशमाधाराख्यं क्रमाद्यजेत्  ३३३
तयोर्दूर्वा प्रदानं च कर्तव्यं देशिकादिभिः
ततोऽसिना त्रिधा रात्रिं गुर्वाद्यैः चूर्णयेत्क्रमात्  ३३४
अस्त्रेणादाय तच्चूर्णं नानापात्रेषु भावितम्
लिङ्गबेरत्रिशूलार्थं जनार्थं कलशादिषु  ३३५
तैलं पृथक्पृथक् पात्रलिङ्गबेरार्थमाहरेत्
प्रोक्षादीनां हृदा यष्ट्वा दद्यात्ताम्बूलपूर्वकम्  ३३६
रात्रिचूर्णं च देयं स्यात् त्रिशूलेन समन्वितम्
कुर्याच्चूर्णोत्सवं शीघ्रं गन्धानु परिचारकैः  ३३७
जनेभ्यस्तैलताम्बूलं दापयेद्गुरुपूर्वकम्
ततस्समुद्रनद्यादौ महातीर्थार्थमानयेत्  ३३८
बेरित्रिशूलसंयुक्तं सर्वालंकारसंयुतम्
स्थण्डिलद्वितयं तीरे कुर्याच्छाल्यदिनाततः  ३३९
एकत्रिशूलं संस्थाप्यमन्यत्र कलशं न वा
सूत्रकूर्चसमायुक्तान् सवस्त्रादिसपल्लवान्  ३४०
पुण्याहं वाचयित्वा तु तेषु गंगादिकान्यजेत्
देवानाहूयपूर्वोक्तदामदोषं विसर्जयेत्  ३४१
कौतुकस्य विसृज्याथ शूलं संस्नापयेत्तु तैः
तीर्थमध्ये ततः प्राग्वदन्नगाहनमाचरेत्  ३४२
जलात्त्रिशूलमुत्तीर्य तत्तीरे विनिवेश्य च
पूजयित्वा ततः शूलं भवनं सन्निवेशयेत्  ३४३
त्रिशूलेन सहस्थानं ये कुर्वन्ति नरोत्तमः
तेऽपि यान्ति शिवस्थानं न तेषां तु पुनर्भवेत्  ३४४

यागमण्टपमासाद्य पूर्णाहुतिमथाचरेत्
ततो मध्याह्नसमये देवं संपूज्य देशिकः ३४५
यागस्थकुंभमानीय सर्वमंगलसंयुतः
प्रदक्षिणवशान्नीत्वा लिङ्गपीठमनुक्रमात् ३४६
देवदेवीं च विद्येशात् रूशास्यात्परितो न्यसेत्
येन संप्रोक्ष्य +++ विशेषस्नपनान्वितम् ३४७
ततस्संपूजयेत्पश्चात् यथाविभवविस्तरम्
सायाह्नसमये पश्चान्नये तीर्थार्थमुत्तमम् ३४८
तद्रात्रौ लोकपालाना +++ मवरोहणम्
कृत्वा तद्दिनमारभ्य परिवेषक्रमं नयेत् ३४९
सप्ताहसर्ववाद्यादिसहितं यानहीनकम्
मौनं सप्तदिनं पश्चात् यजनेन समन्वितम् ३५०
चण्डपूजां तदन्ते तु होमस्तपनसंयुतम्
पुरश्चण्डेश्वरं नीत्वा यानं सप्ताहमाचरेत् ३५१
तदन्ते पूर्ववत्तीर्थं त्रिशूलसहितं नयेत्
ध्वजारोहणतद्रात्रौ विदध्याद्विधिपूर्वकम् ३५२
विजयाख्यात्सवप्रोक्तं विशेषाद्येषु गम्यते
विजयोक्तं नयेत्सर्वं त्रिपञ्चाहादिपैतृके ३५३
लोकपालाध्वजं चाष्टौ भक्तलिङ्गलिहाय च
देविकोद्दिष्टशाहानि पैतृ +++ दाचरेत् ३५४
देविके भवने तीर्थं दिने रात्रध्वजस्य हि
अवरोहं त्रिपञ्चाब्धिगृहरुद्रगणेषु च ३५५
विश्वपञ्चदशक्षौ वा प्रायश्चित्तं तदूर्ध्वतः
ध्वजावरोहनक्षत्रे शुद्धाख्यैः स्नपनं नयेत् ३५६
लिङ्गे परे वृषे शूले स्नपनोक्तप्रकारतः
अर्चनोक्तं समभ्यर्च्य मालाभिरभिभूषयेत् ३५७

तद्रात्रौ पूजयेच्चण्डमीश्वरं स्नपनं युतम्
शुद्धावद्यकं दत्वा होमेन च युतं तु वा  ३५८
ज्ञानतोऽज्ञानतो वापि क्रमान्न्यूनाधिकं मया
ततस्तु मसं पूर्णं  चण्डनाथ तवाज्ञया  ३५९
ध्वजपीठादिकं पश्चात् गत्वा होमहयेद्गुरुः
विसर्जनार्थमुक्षस्तु शताहुत्या वृषाणुना  ३६०
ततो विसृज्य वृषभं ++ चत्वारो हयेत्
ततो ग्रामबलिं दद्यादन्नलिङ्गसमन्वितम्  ३६१
त्रिशूलेन युतं सर्ववाद्यघोष +++++
बलिप्रदानकाले तु सर्ववाद्यं प्रघोषयेत्  ३६२
अन्यत्र मौनमास्थाय मौनाख्यं बलिमाचरेत्
ग्रामं प्रविश्य ब्रह्मादीन् बलिं दत्वा विसर्जयेत्  ३६३
ततः प्रविश्य भवनं बलिपीठे बलिं क्षिपेत्
उत्सवादौ च मध्ये वा भक्तानामुत्सवं भवेत्  ३६४
उत्सवान्ते स एव स्यात् कर्तृवाञ्छावशेन तु
दमनारोहणादौ तु मासपूजार्थमुत्सवम्  ३६५
विधायस्तुकं पूर्वं  रात्रौ वाद्य एव वा
आचार्यपूजकर्तव्या वस्त्रहेमाङ्गुलीयकैः  ३६६
निन्दाति पञ्चनिष्कान्तं तद्बध्या दक्षिणा भवेत्
यागोपयुक्तं यद्द्रव्यं देशिकाया प्रदापयेत्  ३६७
एवं महोत्सवंम् कुर्यात् श्रद्धापूर्वं  नरोत्तमम्
त्रिसप्तकुलमुद्धृत्य शैरमस्थानमाप्नुयात्  ३६८
इति श्रीविजयतन्त्रे त्रिसहस्त्रिकायां संहितयां
भक्तोत्सवपटलः समाप्तः

जलक्रीडाविधिं वक्ष्ये सर्वशान्तिकरं परम्
सर्वमङ्गळकर्मार्थं सर्वप्राणि सुखावहम् १
सर्वमासेषु कर्तव्यं शुक्लपक्षे शुभे दिने
श्रवणे दक्षिणे मासे वैशाखे ज्येष्ठमासके २
संग्रहेन्मासनक्षत्रं अन्यथा रौद्ररोहिणी
शुक्रमौढोदयान्दोषो विधिना स्थापनं त्यजेत् ३
जग्रहेदुत्सवं सौख्यं पूर्वारोहणं वर्जयेत्
भेरीमासौ त्यजेन्मौढ्यं संग्रहेत्सौख्यकर्मणि ४
कामिकोऽपि मुमुक्षो व मौढ्यं दोषो न विद्यते
ध्वजमारोपयेद्रात्रौ शिवयागाधिवासनम् ५
अङ्कुरं प्रतिमास्नानं शूलदेवार्चनादिताम्
सर्वघोषसमायुक्तं जयशब्दादिमङ्गलैः ६
पूर्णाहं वाचयेत्पूर्वं तकाकं वनपूरितम्
प्रातः कालेऽमृतं ग्राह्य सायं काले सुकर्मणि ७
वृषभाङ्कुराधिवासं च सन्धिदेवान् समर्चयेत्
आरोपयेत्पटं शीघ्रं रक्षासूत्रं करे न्यसेत् ८
यागेशं कुम्भमारोप्य होमकर्मप्रधानकम्
पञ्चाग्निविधिरित्युक्तं एकाग्निं संप्रकल्पयेत् ९
पञ्चब्रह्मं हुनेत्सम्यक् सम्यक्सन्धिबलिं ददेत्
यानं कुर्याच्छिवः सन्ध्यौ नित्यं शक्त्यवसानकम् १०
भ्रमणं द्वाररक्तोऽहं बलिहोमौ दिनं प्रति
पूजाहोमबलिं दद्यात् दिनमेकं प्रकल्पयेत् ११
प्रथमं वृषयन्त्रं च द्वितीयं याळिमेव च
तृतीयं भूतयन्त्रं च चतुर्थं सिंहयन्त्रकम् १२
पञ्चमं तुरगारूढं षष्ठं च प्रचया सह
सप्तमं कुण्डली चैव अष्टमं पद्मपीठमम् १३

नवमं फलकारूढं दशमं गजवाहनम्
एकादशं जलक्रीडा चित्रमुग्रसकूटकम् १४
द्वादशं हंसवाहश्च वाहनादिन संख्यया
जलक्रीडाक्रमं वक्ष्ये तटाकं संप्रकल्पयेत् १५
निरीक्षणादि विशुद्ध्यर्थं तटाकाग्रे च उत्तरे
मण्डलं शालिकासीनं नवकर्करिमध्यमे १६
चूताश्वत्थयुकेरं च दर्भैस्सूत्रैस्सुवस्त्रकैः
रक्तगन्धाक्षतादीनि अर्चयेत्तीर्थरक्तवत् १७
जलं गात्रत्रिमन्त्रेण शिवतीर्थं प्रकल्पयेत्
होमं कुर्याच्छताष्टौ तु मूर्तिकुम्भे तु विन्यसेत् १८
मण्डपञ्जलमध्ये तु तीर्थान्तव्यापिनं परम्
ब्रह्मा ++ द्याकृष्ण शिवकृष्णरुद्रसमी मरुत् १९
देवादि चुलिकादूर्ध्वं मण्डपं चिन्तयेत्सुधीः
धर्मादि आसनादूर्ध्वं आसीनं मण्डपं स्मरेत् २०
पुष्याहप्रोक्षणं कुर्यात् मूर्तिकुम्भाभिषेचयेत्
वेदिकाग्रे चतुष्कोठो जलाग्रे पार्श्वविन्यसेत् २१
जलाग्रेरथ चित्तेषु आरोप्यं चन्द्रशेखरम्
देवीसह प्रसादाग्रे मण्दपे तु नियोजयेत् २२
सायं काले प्रकर्तव्यं जलक्रीडां परिभ्रमेत्
नवधा स ++ या ऋक्षं पञ्चधा त्रिविधा चरेत् २३
पुनर्मध्ये न्यसेद्देवं नैवेद्यं बहुधा भवेत्
नीराजनविधिं दद्यात् नृत्तगीतसमन्वितम् २४
स्तोत्रध्वनिसमायुक्तं जलशब्दादिमङ्गलैः
पुनर्देवास्य +++ त् चुलुकोदकपराङ्मुखम् २५
देवमुद्धृत्य कूटस्थं तटाकाग्रे जियोजयेत्
तटाकं चण्डवद्ध्यात्वा भक्तानामुत्सवं परम् २६

पराशक्तिशिवं ध्यात्वा जलक्रीडोत्सवं प्रति
प्रतिसंव +++ रं प्रति सोन्ते सायुज्यमाप्नुयात्  २७
इति विजयाख्ये प्रतिष्ठातन्त्रे जलक्रीडोत्सवविधिपटलः

स्वस्ति श्रीदुर्गाम्बायै नमः
अथ वक्ष्ये नित्यविधिं शौचस्नानादिकं क्रमात्
प्रातरुत्थाय तां देवीं संस्मृत्य मनसा गुरुः  १
निजगेहात्सम्नगद्ये दूरदेशं यथोचितम्
वृतास्यो दक्षकर्णस्थयज्ञसूत्र उदङ्मुखः  २
संध्या स्वहनि मौनी च तृणाच्छन्नमहीतले
मलमूत्रे समुत्सृज्य दक्षिणास्यस्तथा निशि  ३
संमुखं तु द्विजस्त्रीणां तथा सूर्येन्दुवह्निनाम्
भस्म गोष्ठाम्बुमार्गेषु श्मशाने नगमस्तके  ४
न कुर्यान्मलमूत्रे च वृक्षोद्यानादिकेषु च
ततस्तृणैरयज्ञाङ्गै मृज्याल्लोष्टेन वा गुदम्  ५
न तु गोमयपाषाणैर्दारुभिश्च कदाचन
विशुद्धां मृदमादाय तान्निधाय जलान्तिके  ६
तया सान्तरया पश्चात्पयोभिः शौचमाचरेत्
एकालिङ्गे गुदे पञ्च दश वामकरे मृदम्  ७
उभयोः सप्त संयोज्य परिमृज्यात्ततः स्फिजौ
अथवा भावसंशुद्धिपर्यन्तं शौचमाचरेत्  ८
एकैकया मृदाक्षाल्य पादौ हस्तावथाचमेत्
गृहस्थानामिदं शौचं व्रतीनां द्विगुणं भवेत्  ९
त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम्
दिता शौचमिति प्रोक्तं रात्रावुक्तार्धमाचरेत्  १०
सार्धत्वग्भिः समच्छेदैः कनिष्ठाङ्गुलिविस्तरैः

अङ्गाङ्गुलसमायामैः समपर्वैरदूषितैः ११
शिरिबिल्वकरञ्जोत्थैः शिरीषैः खादिराम्बुदैः
दन्तधावनकैः कुर्युर्दन्तशुद्धिं मुमुक्षवः १२
प्लक्षाम्बुकमहाशोकजम्बुचम्पकसंभवैः
अपामार्गानि मुक्तोत्थैः द्वादशाङ्गुलदैर्घ्यकैः १३
प्रकुर्युर्दन्तसंशुद्धिं काष्ठैरेभिर्मुमुक्षवः
नवमी दर्शषष्ठीषु प्रतिपद्यपि नाचरेत् १४
कुर्याद्वा पावनैः पत्रैः बुभुक्षुर्दन्तशोधनम्
अथवा मुखसंशुद्धिं दन्तानां धावनैर्विना
गण्डूषैः सूर्यसंख्याकैर्विधाय स्नानमाचरेत् १५
सिन्धुसंगमकासार तटाकेषु न दे ह्रदे
पलले प्लावने चैव स्नानमत्यन्तमुत्तमम् १६
नाळके पुष्करिण्यादौ मध्यमं कन्यसं पुनः
वापीकूपोदपानेषु गृहे स्नानमनुत्तमम् १७
खात्वा सिना समुद्धृत्य मृदमष्टाङ्गुलात्ततः
हृन्मन्त्रेण समादाय पुनस्तेनैव पूरयेत् १८
शिरसा पयसस्तीरे निधामास्त्रेण शोधयेत्
तृणादीन् शिखयोत्सृज्य वर्मणा विभजेत्त्रिधा १९
ततः पादादिनाभ्यन्ते मस्त्रमन्त्रेण देशिकः
एकेन च मृदंशेन विलेप्य क्षालयेत्ततः २०
मूर्धादिपादपर्यन्तमन्येनास्त्राणुना लिपेत्
जले निरुन्ध्य चाक्षाणि मज्जेदस्त्रमनुं स्मरन् २१
जलमध्यादयोत्थाय तीरं संप्राप्य चाचमेत्
नाभिदघ्ने जले स्थित्वा सौम्यदिग्वदनो गुरुः २२
गङ्गादिसर्वतीर्थानि संस्मृत्याङ्कुशमुद्रया
आकृष्यावाहयेत्तत्र जले संपूजयेत्ततः २३

निधाय धृतमुद्भागं वामपार्णौ च वर्मणा
त्रिधा कृत्वा च याम्येन्द्रसौम्यगान्तान्करोत्वथ २४
षडङ्गैरपि दक्षस्थं सप्तधास्त्रेण पूर्वगम् २५
मूलेन दशधोदक्स्थं विधायान्त्येन मन्त्रयेत्
अष्टदिक्ष्विन्द्रमन्त्रेण पूर्वस्थं च विनिक्षिपेत् २६
विलोलयेज्जले तत्र मूलेनोत्तरदिग्गतम्
पूर्वाङ्गमङ्गजप्तेन मूर्धादिचरणावधि २७
दक्षिणेन समालिप्य पठन्नङ्गं चतुष्टयम्
निधाय श्रवणाद्यक्षमखिलं पूर्ववत्सुधीः २८
मज्जेन्महिततीर्थेऽस्मिन् ततो मूलाणुमष्टशः
जप्त्वाभिषेचयेदङ्गैः स्वशीर्षे कुना मुद्रया २९
पञ्चभिर्जातवेदाद्यैः पुनर्मूलेन चाष्टशः
उपसंहृत्य तत्तीर्थं संहारिण्याथ मुद्रया ३०
उत्तीर्य तज्जलान्मन्त्री विमृज्याङ्गं च निर्जलम्
सुसूक्ष्मे मिर्मले धौते परिधायांशुके ततः ३१
पवित्रपाणिः सोष्णीषः करपाणि मुखानि च
प्रक्षाल्य शुद्धतोयेन समाचम्य यथाविधि ३२
वेदमन्त्रैस्ततो मन्त्री विधिवत्सितभस्मना
त्रिपुण्ड्रधारणं कुर्याल्ललाटादिस्थळेषु चि
तनुयाद्वैदिकं पूर्वं ततो नैमित्तिकं विधिम् ३३
मूलेन पादौ हस्तौ च मुखं प्रक्षाल्य वारिणा
करस्थं त्रिः पिबेद्वीक्ष्य ब्रह्मतीर्थं च शम्बरैः ३४
स्वधान्तेरात्मतत्त्वाद्यैः द्विः प्रमृज्याधरौ हृदा
दक्षिणाङ्गुष्ठमूलेन मध्याभिस्तिसृभिः स्पृशेत् ३५
अङ्गुष्ठतर्जनीमूर्ध्ना स्पृशेन्नासापुटद्वयम्
अङ्गुष्ठानामिकाग्रेण चक्षुः श्रोत्रं मुहुर्जलैः ३६

नाभिं कनिष्ठयुग्मेन वक्षः करतळेन तु
अङ्गुलीभिः समस्ताभिः शिरोंसौ च हृदा स्पृशेत् ३७
संस्पृशेत्करणं कृत्वा प्राणायामेन संस्थितः
त्रिः समावर्तयेन्मन्त्री मनसा मूलमन्त्रकम् ३८
पूर्ववत्पुनराचम्य विधाय गुरुवन्दनम्
कृत्वा कराङ्गविन्यासमेकचित्तव्यवस्थितः ३९
ब्रह्माणीं वैष्णवीं रौद्रीं रक्षां शुक्लां सितेतराम्
प्रातर्मध्याह्नसायाह्न सन्ध्यां ध्यायेदनुक्रमात् ४०
रक्तभूषाम्बरारक्तां जटायज्ञोपवीतिनीम्
हंसपद्मासनासीनां चतुर्वक्त्रां चतुर्भुजाम् ४१
स्त्रगक्षमालिनीं दक्षे वामे दण्डकमण्डलुम्
ब्राह्मीमष्टदृशं ध्यायेत्प्रातस्तारकितेम्बरे ४२
शुक्लाम्बरधरां शुक्लां वममालोपवीतिनीम्
ताक्ष्र्यपद्मासनासीनां हृदयन्नवयौवनाम् ४३
शङ्खचक्रधरां वामे दक्षिणे सगदाभयम्
ध्यायेन्मध्यन्दिने देवीं वैष्णवीं सर्वभूषणाम् ४४
नीलोत्पलसमानाभां किञ्चिच्च पितयौवनाम्
चतुर्भुजां त्रिणेत्रां च जटाखण्डेन्दु मण्डिताम् ४५
त्रिशूलाक्षधरां दक्षे वामे साभयशक्तिकाम्
रौद्रीं ध्यायेद्वृषारूढां कालेर्धास्तमिते दुणे ४६
कृष्णाजिनधराः सर्वाः साक्षिण्यः सर्वकर्मणाम्
तत्प्रभामण्डलाभोगप्रविष्टां स्वतनुं स्मरेत् ४७
पैत्रं मूले प्रदेशिन्याः कनिष्टायाः प्रजापतेः
ब्राह्ममङ्गुष्ठमूलस्थं तीर्थं दैव कराग्रतः ४८
सव्यपाणितले वह्नेः तीर्थं सोमस्य वामतः
ऋषीणां तु समस्तेषु चाङ्गुली सर्वसन्धिषु ४९

एवं करतळे सन्ति तीर्थान्याहुर्द्विजन्मनाम् ५०
दुर्गामन्त्रैस्तु तत्तीर्थं कृत्वा मन्त्रात्मकं गुरुः
तैरेवं प्रोक्षणं मन्त्रैस्ततोयेन समर्चयेत् ५१
वामपाणि च तत्तोययोजनं सव्यपाणिना
उत्तमाङ्गक्रमान्मन्त्रैर्मार्जनं समुदाहृतम् ५२
नीत्वा समुपनासाग्रं दक्षपाणितळस्थितम्
धर्मरूपामिमां स्मृत्वा पूरकेणेडया ततः ५३
आकृष्य धारयेद्बिन्दुं मण्डले कुम्भकेन च
ततः सर्वाङ्गकं पापसंचयं साञ्जनप्रभम् ५४
रेचयेद्दक्षनास्याथ दक्षपाणौ च धारयेत्
क्षिपेद्वज्रशिलायां तत्तद्ध्वेदघमर्षणम् ५५
आचम्य सकलीकृत्य देवीमादित्यमण्डले
ध्यात्वा तदैक्यचित्तस्तु रक्तपुष्पाक्षतादिभिः ५६
पीठान्तदेवी गायत्र्या दद्यादर्घ्याञ्जलिं त्रिशः
तद्गायत्रीं यथा शक्त्या जप्त्वा चैवाभितर्पयेत् ५७
पीठं संकल्प्य तत्तोये देवीमावाह्य तत्र वै
समर्च्य सावृतिगणां गन्धाद्यैर्मनसा ततः
मूलेनाष्टाधिकशतं परिवारान्सकृत्सकृत् ५८
तर्पयेद्विधिना मन्त्री सुधामयजलश्चतैः
ब्रह्माविष्णुहरान्रुद्रमीश्वरं च सदाशिवम् ५९
आदित्यान् सवसून् रुद्रान् विश्वेदेवान्ससाध्वकान्
मरुद्गणांश्च भृग्वादीन् उपवीती ततो गुरुः ६०
तर्पयेद्देवतीर्थेन वह्निजायावसानकम्
मरीचिमत्त्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ६१
काश्यपादिमहर्षींश्च कण्ठस्थब्रह्मसूत्रतः
नमोऽन्तमृषितीर्थेन तर्पयेत्तु ततः परम् ६२

सनकं च सनन्दं च सनत्कादिकुमारकम्
कपिलं च भृगुं पञ्चशिखं वै वौषडन्तकम् ६३
प्राजापत्येन तीर्थेन कनिष्ठामूलमार्गतः
तर्पयित्वा तथाकाश वायुवह्निजलावनीः ६४
वौषडन्ताद्विहस्ताधः कृतयज्ञोपवीतकः
तः प्राचीनानीतवान् ततः
तिलैः पितॄन्स्वधान्तांश्च पितृतीर्थेन तर्पयेत्
अक्षतैश्च तथैवान्यान् सोमादिन्तर्पयेत्ततः ६५
स्वकीयान्पितृमात्रादीन् मातामहपितामहान्
भ्रातॄन् सखीन्सपत्नीकान् तर्पयेत यथाक्रमम् ६६
हृन्मन्त्रेणाथ ततीर्थमाकृष्यात्मनियोजयेत्
अथ संपूजयेद्भानुं बिम्बे वा स्थण्डिलेऽपि वा ६७
मण्डपे वा विशुद्धात्मा देवं कालात्मकं गुरुः
कराङ्गन्यसनं कृत्वा मूलेन प्राङ्मुखः स्थितः ६८
आत्मानं भास्वरं चात्र भानुं बिम्बे विभावयेत्
प्रणवं भुवनाधीशीं ततो व्योम सबिम्बकम् ६९
सविसर्गं भृगं ब्रुयादिति सौरोदितो मनुः
ब्रह्मा मुनि छन्दसि स्याद्गायत्री देवता तथा ७०
भुवनेशी समुद्दिष्टा न्यसेन्मूर्धादिकेष्विमाः
तारादिना च भृगुणा दीर्घस्वरयुतेन च ७१
हृदयादिषु विन्यसेदङ्गान्येवं विचक्षणः
देवीं विकर्तनाभिन्नां ध्यात्वा संपूजयेत्सुधीः ७२
स्थण्डिलं पुरतः पश्चात्कृत्वा शुद्धतळे समे
प्रभूतां विमलां सारां समाराध्यां सुखाभिधाम् ७३
परमाद्यामिति प्रोक्ताः पञ्चशक्तीः क्रमेण च
पावका दिवि दिक्ष्वस्त्रमध्ये च परिपूजयेत् ७४

ज्ञानात्मान्तमथाधारशक्त्यादिर्चितपङ्कजे
नवाश्रसंयजेच्छक्तीः समष्टिमनुमेव च ७५
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा
अमोघा विद्युता चैव नवमी सर्वतोमुखी ७६
सतीदीर्घचतुस्सन्धिबिन्दुसर्गाक्षरैः क्रमात्
अनलैर्युक्तमूलास्ताः संपूज्या नवशक्तयः ७७
ब्रह्मा विष्णुशिवाख्यान्तेथात्मकायपदं वदेत्
सौराय योगपीठाय नम इत्युच्चरेत्पुनः ७८
एवमत्राभीमरुचेः पीठमन्त्रः समीरितः
मूर्तिमन्त्रेण संकल्प्य तत्र भाल्लेखिकं गुरुं रविम् ७९
आवाह्य तत्तन्मुद्राभिः संस्थापनमुखं क्रियात्
मुन्याद्यङ्गानि विन्यस्य ध्यात्वा पाद्यादिभिः क्रमात् ८०
उपचार्योपचारैश्च यजेदावरणान्यथ
हृल्लेखागगना रक्ता महोच्छुष्मा कराळिका ८१
पञ्चशक्तीरिमा मध्ये चतुर्दिक्षु समर्चयेत् ८२
अङ्गषट्कं यजेत्पद्मकेसरेषु दळेष्वथ
मातृस्तदनुसोमादीन् दिक्षुपूर्वादि तद्बहिः ८३
सोमं कुमुदकुन्दाभं बुधं चामीकरप्रभम्
गुरुं गोरोचनाभासं शुक्रं गोक्षीरसन्निभम् ८४
अङ्गारकं रक्तवर्णं राजा वर्तनिभं शनिम्
कृष्णाकृष्णाञ्जलिं राहुं केतुं धूम्राभसंनिभम् ८५
कामरूपधराः सर्वे दिव्याम्बरविभूषणाः
वामोरुन्यस्तहस्ताब्जा दक्षाहस्ताभयप्रदाः ८६
ध्यानं पूर्वं ग्रहानेवं पूजयित्वा यथाक्रमम्
इन्द्रादीनथ दिक्पालान् तदस्त्राणि यजेत्ततः ८७
त्रिणेत्रामिन्दुलेखाख्या प्रस्फुरद्रत्नभूषणाम्

स्वदेहोत्थैः प्रभाजालैरुज्ज्वलन्तीं जगत्त्रयम् ८८
पाशाङ्कुशवराभीतिर्दधानां हस्तपङ्कजैः
भावयेद्भास्कराभिन्नां देवीमावरणान्विताम् ८९
गन्धाद्यैरर्चयेदेनां शक्तिं तत्पुरतो गुरुः
चषकं ताम्रसंक्लृप्तं प्रणिधाय विलोमतः ९०
उच्चरन्मातृकामन्त्रं पूरयेद्विमलैर्जलैः
चन्दनाक्षतदर्भाग्रतिलसर्षपकांस्तथा ९१
दूर्वातिलयवांश्चैव तत्र संयोजयेज्जले
शोषोषणौ ततः कुर्यादमृतीकरणं पुनः ९२
विधायनिजहस्तेन त्वत्पात्रं जलपूरितम्
सौरमन्त्रमिमं मन्त्री जपेत्साष्टाधिकं शतम् ९३
दैवीं सावरणां यष्ट्वा सूर्यं तत्रोज्ज्वलं ततः
अन्योन्यकान्तिसंसर्गात्तयोरैक्यं धिया स्मरन् ९४
उपचारैरुपचरेत्तत्तेजो विधिवद्बुधः
जानुभ्यामवनिं गत्वा कराभ्यामर्घ्यपात्रकम् ९५
आमस्तकं समुद्धृत्य मण्डलाबद्धदृङ्गना
अर्घ्यं सुधामयं दद्याद्भानवे तन्मनुं वदेत् ९६
दत्त्वा पुष्पाञ्जलिं पश्चात्तस्मिन्संसक्तमानसः
साष्टाधिकशतं जप्त्वा मनुमस्य विचक्षणः ९७
तत्सौर्यशाक्तिकं तेजः समर्च्य कुसुमादिकैः
ततः स्वहृदि संयोज्य देवीं तां चित्स्वरूपिणीम् ९८
भानुमुद्वासयेदेनां व्योमस्थरविमण्डले

इति श्रीविजयागमे शौचस्नानादिसौरपूजाविधिः प्रथमः पटलः

अथ वक्ष्ये समासेन दुर्गाया यजनं क्रमात्
रहस्यं धर्मकामादि चतुर्वर्गफलप्रदम् १
देशिकः स्वगुरूद्दिष्टवर्त्मवर्त्तिविशुद्धधीः
साधनान्यत्र योग्यानि संनिधीकृत्य शिष्यकैः २
यं रं वमिति बीजैश्च शोषणादीन् प्रकल्पयेत्
पात्राणि विन्यसेद्दक्षे नानापुष्पयुतानि च ३
पूरितं कलशं वामे शोधितैर्विधिवज्जलैः
अग्रे सुगन्धगन्धादि साधनान्वितपात्रकम् ४
पश्चात्प्रविन्यसेत्पात्रं करयोः क्षालनाय च
स्थापयेद्वर्धनीं वामे निर्मलाम्भः प्रपूरिताम् ५
अर्घ्यपात्राणि वायव्यां रौद्र्यामाचमनीयकम्
नैर्ऋत्यां स्थापयेत्पाद्यमाग्नेयां मधुपर्ककम् ६
प्रोक्षणीपात्रविन्यस्य तेषु द्रव्याणि पूरयेत्
पाद्ये श्यामाकदूर्वाब्जे विष्णुक्रान्तानि योजयेत् ७
जाती चम्पकतक्कोलं क्षिपेदाचमनीयके
दध्याभ्य मधुसंमिश्रं मधुपर्कं प्रकीर्तितम् ८
अर्घ्यपात्रे ततो गन्धपुष्पाक्षतथवास्तथा
सकुशाग्रतिलश्यामदूर्वाग्राणि क्षिपेत्क्रमात् ९
मूलाग्रैरथ संस्पृष्ट्वा तानि चैवाभिमन्त्रयेत्
अवकुण्ठ्य तनुत्रेण धेनुमुद्रां प्रदर्शयेत् १०
ततो लिङ्गस्थनिर्माल्यं मुण्डन्यां च विसर्जयेत्
ततोऽभिषिञ्चयेद्देवीं गोशृङ्गाग्रप्रमाणतः ११
धारा रूपेण तोयेन प्रायशश्च सुधाधिया
पावमानी ऋचः पञ्च जातवेदादयस्तथा १२
दुर्गासूक्तं च मूलाणुं जपन्तन्मूर्ध्निमानसः
विमृज्य सूक्ष्मवस्त्रेण लिङ्गं पीठं च निर्जलम् १३

अष्टगन्धेन तल्लिङ्गं सम्यगालेपयेत्ततः
चन्दनागरुमांसीन्दुकपिचोराः सरोचनाः १४
काश्मीरमिहशाक्तेयमष्टगन्धमुदीरितम्
द्विगुणं घनसारं स्यात्कुङ्कुमं चन्दनागरुम् १५
समौ चतुर्गुणा मांसि त्रिगुणा चैव रोचना
षड्गुणौ कपिचोरौ तु इति शेषा उदीरिता १६
सुगन्धकुसुमैः पश्चादलं कुर्याद्विशेषतः
अभिवन्द्य गुरुं मूर्ध्नि वन्दनी मुद्रया ततः १७
आलिप्य निजवामाङ्गे स्थण्डिलं गोमयाम्भसा
रचयेच्चन्दनेनात्र वृत्तभूपुरवेष्टितम् १८
त्र्यश्रं मूलेन तन्मध्ये क्षिपेत्पुष्पाक्षतान्यपि
क्षालयेदस्त्रमन्त्रेण पीठं शङ्खं च वारिणा १९
तत्र विन्यस्य तत्पीठं ताराद्यान्ते नमोन्तिकाः
वह्नेर्दशतिलाः पश्चाद्यजेत्तन्मण्डलाणुना २०
न्यस्त्वा शङ्खं हृदा गन्धाक्षतपुष्पैश्च मण्डयेत्
द्वादशार्ककलास्तद्वत्प्रयजेद्देशिकस्ततः २१
शिरोन्तिका जपन्नत्र मातृकां विगतः क्रमात्
शङ्खः तद्वर्धनी तोयैः पूरयेद्विमलोपमैः २२
कला इन्द्रोः समभ्यर्च्य मण्डलं च तदम्भसि
स्पर्शनं धेनुमुद्रां च गाळिनीमवकुण्ठनम् २३
वीक्षणं जोदिकां कुर्यात् षडसि मनुभिः क्रमात्
गङ्गे च यमुने चैव गोदावरि सरस्वति २४
नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु
एवं समुच्चरन्मन्त्री मुद्रयापांकुशाख्यया २५
आकृष्य मण्डलाद्भानो स्तीर्यमत्राभियोज्य च
इडया हृदयाम्भोजाद्दौर्गं तेजश्च तज्जले २६

आवाह्य सकलीकृत्य गन्धाद्यैर्मूलमन्त्रतः
पूजयेददसीयाङ्गमनुभिस्तत्पदेष्वथ २७
शङ्खमाच्छाद्य हस्ताभ्यां तदम्भश्च सुधात्मकम्
भावयम् प्रजपन्मन्त्री मूलमन्त्रमथाष्टशः २८
त्रिवारमनुना चैव स्वतनुं स्थण्डिलं पुनः
यांगद्रव्याणि सर्वाणि प्रोक्षयेत्प्रतिमामपि २९
अथ संपूजयेन्मूर्ध्नि गुरून्गन्धाक्षतादिभिः
कल्पयेद्विधिना मन्त्री विविधांश्चोपचारकान् ३०
स्वविन्दुस्वाद्यक्षराद्यान् वह्न्यादिवदिशास्तथा
गणेशं भारतीं दुर्गां क्षेत्रपालान्यजेत्ततः ३१
पुरस्ताद्वाह्य पूजोक्त विधिना पीठमर्चयेत्
हृदि यष्ट्वा प्रकृत्याद्याः पुनः सौम्यादिकानि च ३२
गात्राणि वदने वामपार्श्वे नाभौ च दक्षिणे
पार्श्वे समर्चयेच्चाथ पीठपादान् बलादिकान् ३३
वामांसोर्वोर्दक्षिणो रौ दक्षिणांसे समर्चयेत्
प्रयजेद्धृदये भूयः शेषं भूमिगुणत्रयम् ३४
अव्यक्तादिस्तथा माया विद्यात्मादीन्यजेत्तथा
नवशक्तीः केसरेषु मध्ये पीठाणुना यजेत् ३५
ततस्तत्कर्णिकामध्ये ध्यायेद्देवीं चिदात्मिकाम्
मूलेन पञ्चशस्तस्यै कुर्यात्पुष्पाञ्जलिं हृदि ३६
आत्मतत्त्वं ततो विद्यातत्त्वं च परतत्त्वकम्
मूलाधारे च हृदये भ्रुवोर्मध्ये समर्चयेत् ३७
लिपितत्त्वकराङ्गाणुमूलमन्त्रैश्च देशिकः
न्याससंप्रोक्तमार्गेण तत्तस्थानेषु चार्चयेत् ३८
सितरक्तानि पुष्पाणि दक्षे वामेन्यसीत्ततः
सममादाय हस्ताभ्यां उत्पले करवीरकौ ३९

पद्मे तुलस्यौ सर्वाणि पुष्पाणि च यथाक्रमम्
शिरो हृदयलिङ्गास्थि सर्वाङ्गेषु विलक्षणः ४०
अर्चयेज्ञातवेदादौ दुर्गामन्त्रैश्च पञ्चभिः
ततो मूलेन हृत्पद्मं कर्णिकायां विनिर्मलाम् ४१
देवीं यष्टोपचारैश्च जपेत्तदनु तन्मनुम्
आदायार्चितपुष्पाणि तानि संहृत्य दीर्युजा ४२
तदीयगन्धमाघ्राय कूर्चाग्रगळिताम्बुभिः
अर्पयेदथ मुण्डिन्यै वामे तन्मनुमुच्चरन् ४३
आत्मानं समलंकुर्याच्चन्दनाञ्जनपूर्वकैः
पुष्पाक्षतैमृगमदैरलंकारैर्विशेषतः ४४
स्वयं देव्यात्मकं ध्यायन् बाह्यपूजामथारभेत्
सतारशक्तिबीजेन मध्ये प्रकृतिमर्चयेत् ४५
कमठं ब्रह्मबीजेन तदूर्ध्वे वास्तुपूरुषम्
रत्नमण्टपमभ्यर्च्य पीठोर्ध्वं वामतस्ततः ४६
शिलाद्रिनिलपर्यन्तं ओन्नमोन्तान् शिवादिकान्
श्रीशब्दादीन् गुरून् पश्चात्परमादींस्तथैव च ४७
प्रयजेत्परमेष्ठ्यादीन् परमाचार्यपूर्वकान्
स्वगुरूंश्च ततो दक्षे विघ्नेशं पूजयेत्सुधीः ४८
सौम्या भद्रा जयाख्याश्च स्फटिकोपमनिमेलाः
एताः पीटस्य गात्राणि स्वादिवर्णैः सबिन्दुकैः ४९
पूर्वादिदिक्षु संपूज्य वह्न्यादि विदिशस्तथा
बलं च प्रबलं चैव सुबलं च महाबलम् ५०
पीठपादानिमान् शुक्लरक्तपीतासितप्रभान्
क्लीबार्णैरथ तन्मध्ये शेषं च पृथिवी यजेत् ५१
शुक्लासितान् तन्तून् ततः स स्वादिकान् गुरुगान्
अव्यक्तचित्तकन्दं च बुद्धिनाळं ततः परम् ५२

बीजान्तिकमहंकारबिन्दुन्द्वान्तैः प्रन्नलाक्षरणैः
श्रों नमोन्तानिमान् मन्त्री तत्रैव प्रयजेत्ततः ५३
व्योमादिपञ्चभूताख्यमात्मनेन्तान् क्रमाद्वदन्
कर्णिकं केसरं पश्चान्नळं चैव दळाशकम् ५४
परिवेषं स श्रोनार्दं स्वाद्यर्णेन सबिन्दुना
पद्माय नम इत्युक्तैर्मन्त्रैरर्चसमर्पयेत् ५५
मायां विद्यां च विधिवदौराणैर्मण्डलत्रयम्
श्रात्मानमन्तरात्मानं परमात्मानमेव च ५६
प्रणवांश्चेशश्च शक्त्याथ ज्ञानात्मानं समर्चयेत्
केसरेष्वथ मध्ये च नवशक्तीः क्रमाद्यजेत् ५७
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः
सुप्रभा विजया सर्वसिद्धिदा नवशक्तयः ५८
बीजान्यासं स्वराः प्रोक्ता ह्रस्वक्लीबश्च वर्जिताः
बिन्दुयुक्तास्तु ते सर्वे वर्जयित्वान्तिमं स्वरम् ५९
प्रवदेत्प्रणवं वज्रनखदंष्ट्रायुधानि च
महासिंहाय वर्मास्त्र नम इत्युच्चरेत्ततः ६०
समष्टिमनुनानेन पीठं तत्कणिकोपरि
ध्यायेद्दुर्गां ततो मन्त्री सर्वाभरणभूषिताम् ६१
दूर्वादळसमप्रख्यां प्रसन्नवदनाम्बुजाम्
वसनां रक्तकौशेयं त्रिणेत्रामिन्दुशेखराम् ६२
त्रयीमयीं ब्रह्मरूपां भक्तदुर्गतिहारिणीम्
शङ्खचक्रगदाखड्गपाशाङ्कुशवरान् धनुः ६३
दधतीमष्टभिर्दोर्भिः प्रभादीप्तदिगन्तराम्
ध्यात्वैवं मनसा दुर्गामूर्तिं तन्मनुना पुनः ६४
पुष्पाञ्जलिं ततः कुर्याददसीयकळेबरे
श्रादौ मूलं ततो दुर्गा मूर्तिं कर्मपदं पुनः ६५

कल्पयामि नतिं ब्रूयादयं मूर्तिमनुं स्मृतः
धृत्वा पुष्पाञ्जलिं ++ गुरुं निजगुरूक्तया  ६६
उद्भिद्य ब्रह्मणो ग्रन्थिं मूलाधाराम्बुजोदरे
दलावर्तसमाकारां सुखसुप्तां व्यवस्थिताम्  ६७
चिन्मयीं कुण्डलीशक्तिं स्मरेदुद्बोधनानताम्
उपर्युपर्यथायान्तीं चक्रभेदावशात्पुनः  ६८
संयोज्य षोडशान्तस्थं प्रियमानन्दसागरम्
तद्योगजामृतासिक्तं स्वतेजो हृद्गतं स्मरेत्  ६९
कुण्डल्या सहमूलादि षोडशान्तसमुद्भृते
अञ्जल्यात्तप्रसूनेन डेनासि कालिकसंस्थिते  ७०
तत्तेजोंशु नियोज्याशु हृत्पद्मादिडया ततः
सुषुम्नां ब्रह्मनाड्यैत्य तन्मूर्त्यांश्चक्रसंहितम्  ७१
भित्त्वा तन्मूलगं भाव्य तन्मयः पुष्पसंचयम्
तन्मन्त्रेण क्षिपन्नत्र मुद्रयावाहयेत्सुधीः  ७२
तारसंपुटितं मूलं वदेद्भगवतीत्यथ
अत्र शब्दं पुनर्गच्छ युगमावाहयामि च  ७३
आवाहिता भवेत्युक्तो दुर्गावाहनमन्त्रतः
आधारनाभिहृदिषु भ्रूमध्ये मस्तके ततः  ७४
कुर्यात्संस्थापनादीनि तत्तन्मुद्राभिरेव च
संस्थापिता च संपूर्वे व्यापिता निहिते पुनः  ७५
संनिरुद्धावपूर्वा च कुण्ठितैता भवन्तिकाः
मूलेनाथ त्रिशोगन्धरसपचिनदोर्युजा  ७६
मूर्धादिपादपर्यन्तं व्यापय्य तदनन्तरम्
अञ्जनीं वन्दनीं योनिमुद्रा आयुधमुद्रिकाः  ७७
दर्शयित्वोपचारांश्च कुर्वीत स्वागतादिकान्
तदग्रे स्वागतं क्षेमप्रश्नानिगदतात्ततः  ७८

पाद्यं पादाम्बुजद्वन्द्वे दद्याद्देव्या हृदाञ्जना
स्वधाणुना मुखाम्भोजे दद्यादाचमनं पुनः ७९
शिरोमन्त्रेण तन्मूर्ध्नि दद्यादर्घ्यं विशुद्धधीः
मधुपर्कान्ततो दद्यात्सुधामन्त्रेण तन्मुखे ८०
तत्तत्तेनैव मन्त्रेण पुनराचमनं दिशेत्
दत्त्वा पुष्पाञ्जलिं देवीं स्नानपीठे स्मरेत्ततः ८१
मूलेन तैलमालिप्य व्रीहिगोधूमचूर्णकैः
कृत्वोद्वर्तनमुष्णाभिः सेचयित्वा ततः परम् ८२
शुद्धोदकैः पञ्चगव्यैः पलाद्भिः केरवारिभिः
पञ्चामृतैः कषायाद्भिः गन्धोदैः कलशोदकैः ८३
क्षीरैर्मणिजलैः पञ्च दुर्गाभिः शंनवर्गकैः
पावमानेन यः कुर्याद्देव्याः स्नपनमादरात् ८४
तदङ्गं वाससोन्मृज्य परिधायोत्तमाम्बरम्
पूर्ववत्पाद्यमाचामं दत्त्वा दुर्गाद्यया ततः ८५
कुङ्कुमागरुकस्तूरी गन्धपङ्केन लेपयेत्
कमलोत्पलकह्लारकेतकीकरवीरकैः ८६
जातीचम्पकपुन्नागकेतकीनागचम्पकैः
अशोकमल्लिकाकुन्दपारन्तीपारिजातकैः ८७
नन्द्यावर्माख्यपलाशकर्णिकारमुखैस्तथा
देवीं तां समलंकुर्यात्पुष्पैरन्यैः सुगन्धिभिः ८८
मलिनाघ्रातभूमङ्गसंस्पृष्टमुकुळानि च
शीर्णानि कृमि केशानि दूषितानि च बुद्धिमान् ८९
पुष्पाण्येतान्यशिष्टानि त्यजेत्पर्युषितानि च
ततो नूपुरकेयूरकाञ्चीसारशनोर्मिकाः ९०
ग्रैवेयहारकटकनासिका मणयस्तथा
कर्णभूषणसीमन्तरतोद्यम्मकुटादिकान् ९१

अवमुक्तैरलंकारैः स्वर्णरत्नविचित्रितैः
भूषयेत्पूर्ववन्मुद्रा दर्शयेत्पुरतस्ततः ९२
तारेण तत्प्रभेदाद्यैरात्मविद्यापरात्मकैः
तत्त्वैर्न्यासोक्तमार्गेण लिपिभिश्च समर्चयेत् ९३
देव्यालयार्चमित्येवं कृत्वा बिम्बे पुरा ततः
अङ्गाद्यावरणानीशि पूजयामि तवाज्ञया ९४
कुरुष्वेत्यभ्यनुज्ञातो यजेदावरणान्यथ
वह्नेरिव स्फुलिङ्गाश्च रवै निस्त्रानिवाम्बुधेः ९५
उर्वीनिवोद्धतान् देव्या स्मरेदावृतिदेवताः
अग्नेश्च मूर्तिभिश्चास्त्रैर्भद्राद्याभिश्च मातृभिः ९६
सिंहाद्यैर्ललिताद्याभिर्लोकपालैस्तदाद्युधैः
इत्यतोक्तानि पूज्यानि नवधावरणानि च ९७
स्वस्वनामाभिरोमाद्यैः सचतुर्थीनमोन्तिकैः
गन्धपुष्पादिभिर्मन्त्री यजेदावृतिदेवताः ९८
दिशासु हृदयादीनि कोणेष्वस्त्रं पुरादृशम्
षडङ्गमिति राजीवकेसरेषु समर्पयेत् ९९
कारहाराभिखिलिनीतमालस्वर्णसन्नभाः
वराभयधरायोषाः स्मरतादङ्गदेवताः १००
जया च विजया चैव कीर्तिः प्रीतिः प्रभाहया
श्रद्धा मेधा श्रतिश्चेति प्रोक्ता दूत्यः क्रमादिकाः १०१
बिन्द्वन्तैः स्वस्वनामादिवर्णैः पूर्वादिगादिकम्
मन्त्रीसमर्चयेदब्जपलाशेषु यथाक्रमम् १०२
स्वर्णेन्द्वरुणकुन्दाभतडिन्मुक्तेन्द्रगोपभाः
स्मरेदलङ्कृतादूतिर्दारारिवरदाभयाः १०३
चक्रशङ्खगदाखड्गपाशाङ्कुशशरान्धनुः
अस्त्राण्येतानि पूज्यानि पत्राग्रेषु मनीषिणा १०४

बीजानि चैषां नामादि वर्णानि सलवानि च
चक्रखेटकयोर्बीजे वह्निक्ष्वेळौ तयोरितौ १०५
तारस्वबीजपूर्वाणि संबुद्ध्यन्तानि योजयेत्
तन्नामानि फडन्तानि नमोन्तान्यर्चनाविधौ १०६
पटलेन्द्वरुणश्यामरक्तशुक्लासितानि च
पीतशुक्लतटिद्रक्तशुक्लाभानि क्रमादिति १०७
तानि च क्रादिक्रास्त्राणि संस्मरेन्मण्डलानि च
भद्रा भद्रावती चैव सैन्यासैन्यप्रमर्दिनी १०८
प्रळया सिंहला पश्चाद्दुर्गा च विजया तथा
तद्बहिः पूजनीयाः स्युः इमाः प्रागादिदिक्षु वै १०९
रक्तेन्द्वभहरीधूम्रतटित्कोशारुणाब्जभाः
स्वरः स्याः सर्वभूषाढ्या भद्राद्या देवताः स्मरेत् ११०
ब्राह्म्याद्याः पूजयेत्पश्चात्तद्बहिर्मातृका गुरुः
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी पुनः १११
वाराही च तथेन्द्राणी चामुण्डा च तथा परा
महालक्ष्मी समाख्याता ब्राह्म्या अपि मातरः ११२
मृगेन्द्रगुहविघ्नेश शास्तारक्षेत्रपालकान्
मध्यादि च चतुर्दिक्षु मन्त्री तद्बहिरर्चयेत् ११३
ललिता वरदा रौद्रा विजया वरवर्णिनी
सौन्दरी सुभगा चैव सुनन्दा परमेश्वरी ११४
ललिता इमाः पूज्या मध्या पृष्ठा दिशास्वतः
तारहीराभ्रहेमाळि धूमार्कारुणनीलभाः ११५
लळिताद्याश्चिन्तनीया मन्त्रिणा देवताः क्रमात्
तन्मूलपार्श्वदोपेतान् हेतिवा हाद्रिवाच्यकान् ११६
दिक्पतीन् तद्बहिर्मन्त्री यजेत्पूर्वादि दिक्षु च
इन्द्रो वह्निर्यमो रक्षो वरुणो नील एव च ११७

सोम ईशस्तथा हन्त ग्रध ऊर्ध्वं पितामहः
दिगीश्वराः समाख्याताः पूजनीयाः क्रमेण वै ११८
मातृसिंहादिदेवानां दिक्पालानां तथैव च
ध्यानानि पुरतोच्यन्ते बलिदानविधौ क्रमात् ११९
वज्रं शक्तिं च दण्डं च खड्गपाशौ तथाङ्कुशम्
गदाशूलारिपद्मानि यजेदस्त्राण्यमून्यतः
स्वर्णदूर्वर्णजलदभृङ्गपिङ्गनिभानि च १२०
रक्तकुन्दाभगगनारुणवर्णान्यमूः क्रमात्
स्मरेद्वज्रादिकास्त्राणि सचित्राभरणानि च
ततः सोमेशयोर्मध्ये मुण्डीन्निर्माल्यधारिणीम् १२१
ग्रचयेद्गन्धपुष्पाद्यैः मन्त्री तन्मनुनैव च
प्रणामद्वयमुद्धस्थं तिंकारं ग्रोन्नमोन्तिकम् १२२
तन्नामधेयित्मित्येवं मुण्डिन्या मनुरीदितः
देवीं सावरणां पश्चान्मूलेन कुसुमैर्यजेत् १२३
कुर्यात्पुष्पाञ्जलिं पञ्च पूर्ववच्चोपचारकान्
ततोस्तमनुना घण्टां गन्धपुष्पासतैः क्रमात् १२४
पाद्यमर्घ्यं तथाचामं निवेद्यस्यार्पणाय च १२५
दत्त्वा तदग्रतः कुर्यात्स्थण्डिलं देशिकस्ततः
गुग्गुल्वगुरुलध्विन्दुचन्दनाद्यैर्घृताप्लुतैः १२६
कृत्वा हारैश्च गधाढ्यं धूपं वायुसमन्वितम्
वाजयन्पूजितां घण्टां वामदोष्णा परेण च १२७
दुर्गायै सप्तवारं तु नीपैधूपं प्रदापयेत्
गोघृता सिक्तकर्पूरवर्त्त्यो दीपं च पूजयेत् १२८
दीपं दक्षक्रमेणोच्चैर्दत्त्वा संपूजितानलम्
पुष्पाञ्जलिं ततः पाद्यं दद्यादाचमनं पुनः १२९
निधाय तत्र साघारं पात्रं स्वर्न्नादिसंभवम्

विशुद्धं परिशुद्धान्नं परितश्च षकैर्युतम् १३०
हविरत्र विनिक्षिप्य बहुशुभ्रं सपायसम्
फलापूपादिभक्षाढ्यं दध्याद्यन्नसमन्वितम् १३१
पञ्चामृतैश्च पानीयैः अन्यैः स्वादुदसायनैः
पूरयेत्सूपशाकोपदंशैस्तच्च षकेषु च १३२
अस्त्रेणाभ्युक्ष्य संरक्ष्य निवेद्यमरिमुद्रया
शोषयेद्वायुसंजप्ते जलं संप्रोक्षणेन च १३३
तद्दहेदग्नमद्दोष्ण वामहस्तामृतेन च
संप्लाव्येदं पुनर्मन्त्री मन्त्रामृतकृतं स्मरेत् १३४
अष्टशोथ जपेन्मूलं दर्शयेद्धेनुमुद्रिकाम्
गन्धाद्यैर्हविरभ्यर्च्य देव्याः पुष्पाञ्जलिं क्षिपेत् १३५
ततस्तद्वदनाम्भोजां निर्गत्य चितिमुज्ज्वलाम्
सुधामयमिदं यान्तीं नैवेद्यमिति भावयेत् १३६
कृत्वाथ परिषेकाद्यं वह्निजायावसानकम्
उच्चरन्मूलमन्त्रं च किञ्चिदर्घ्यजलं क्षिपेत् १३७
निवेदयामि ते देवि जुषाणेदं हविः शिवे
उच्चरन्निति नैवेद्यं इदं पुष्पसमन्वितम् १३८
उच्चरन्हस्तपद्माभ्यामम्बिकायै निवेदयेत्
प्राणादिमन्त्रैस्तन्मुद्रान्दक्षहस्तहस्तेन दर्शयेत् १३९
ग्रासमुद्रां तु वामेन विकचोत्पलसन्निभाम्
मलरूपं धातुरूपं रसरूपमिति त्रिधा १४०
एतन्नैवेद्यमुद्दिष्टं तत्र भुक्त्वा रसात्मकम्
देवीं सन्तृप्तचिन्तान्तामिति संभावयेत्सुधीः १४१
संपिधाय ततो द्वारमाग्नेयां दिशि मन्त्रवित्
तत्र कुण्डे स्थण्डिले वा होमकर्मसमारभेत् १४२
आदाय वह्निं संस्कृत्य यजेद्देवीं च तन्मयीम्

जातवेदादिकैर्मन्त्रैः संस्कृतेन घृतेन च १४३
सतारव्याहृतिभिश्चापि पीठमन्त्रैः सकृत्सकृत्
हुत्वा तत्र समिद्धेग्नौ मूलमन्त्रेण वै पुनः १४४
हुनेदष्टोत्तरशतं अष्टाविंशतिमेव वा
अष्टौ वा होमयेन्मन्त्री चरुणा चाथ सर्पिषा १४५
अङ्गाद्याहृतितारादि व्याहृत्यणुभिरप्यथ
एकैकशः क्रमाद्धुत्वा पुष्पाद्यैस्तां यजेत्पुनः १४६
मूलबिम्बे नियोज्यैनां ततो वह्निं विसर्जयेत्
आग्नेय्यां चैव वायव्यां द्वारोपान्तेऽथवा गुरुः १४७
अवशिष्टेन हविषा प्रदद्यात्परिषद्बलिम्
ततो द्वाःस्थाभ्यनुज्ञातः पूजास्थानं प्रवेश्य च १४८
क्षिप्त्वापोशनबुद्ध्याम्बु तन्मन्त्रेण तदानने
समर्पयेच्च मुण्डिन्यै तन्निर्माल्यपुरस्सरम् १४९
तन्निवेद्यं बहिर्नीत्वा स्थळं तच्चास्त्रमन्त्रतः
संक्षाळ्य चास्यगण्डूषं दन्तोद्वर्तनमाचरेत् १५०
दद्यात्पाद्यं पुनर्गन्धं ततस्तोद्वर्तनानि च
मुखवासं च ताम्बूलं ततो देव्यै समर्पयेत् १५१
पूर्ववद्धूपदीपौ च दद्याद्घण्टा च ताडयेत्
तदनु भ्रामयेद्दीपानाधारपरिकल्पयेत् १५२
प्रकल्पिताधिदेवांश्च तन्मूर्ध्निज्वलयोज्ज्वलान्
त्रिपञ्च सप्तदीपेषु भ्रामणं तावदीरितम् १५३
दीपास्तदधिकाश्चैव प्रोक्तमाधारसंख्यया
दीप आधार भेदेषु कल्प्या रम्यं यथा तथा १५४
वह्निबाणा चलनवरुद्रादित्यमिता इति
आधारभेदाः संप्रोक्ताः दीपानां च यथा क्रमम् १५५
त्रयाणां चैव दीपानां देवतास्तु त्रिशक्तयः

हृल्लेखाद्यैश्च संप्रोक्ताः पञ्च दीपाधिदेवताः १५६
ब्राह्म्याद्या मातरः प्रोक्ताः सप्तदीपाधिदेवताः
त्रिमूर्तयस्तथा पञ्च भूतसप्तर्षयो ग्रहाः १५७
न वैकादशरुद्राश्च द्वादशार्कास्तथैव च
क्रमादाधारदीपानां देवा एते समीर्तिताः १५८
मन्त्रपुष्पाञ्जलिं कृत्वा सुप्रसन्नामिमां ततः
स्मरन्यजेत्प्रसूनाद्यैर्मूलमन्त्रेण चाष्टशः १५९
विसृज्याथ त्रिशोर्घ्याम्बु ध्यार्म्बु गायत्र्या च तदीयया
पुनर्मूलेन तां स्पृष्ट्वा जपेत्तन्मुद्रयाष्टशः १६०
अष्टपुष्पाञ्जलीन्कृत्वा तन्मन्त्रेण ततः परम्
धारिका दीप्तिरत्युग्रा ज्योत्स्ना श्वेता बलोत्कटाः १६१
धात्री बैल्वीत्यमूः प्रोक्ताः तन्मन्त्रेण नमोन्तिकाः
दर्पणव्यजनं छत्रं तोमराणयथ युग्मशः १६२
सुधूपदीपमाल्यानि भोगानन्यान्नृपोचितान्
समर्प्य तोषयेद्देवीं नृत्यगेयानि वाद्यकैः १६३
स्तुत्वा स्तोत्रेण तां देवीं तदीयेन तदग्रतः
जपेदष्टशतं मूलं ध्यायन्ता निश्चलेन्द्रियः १६४
वरदा चिन्तहस्ताब्जे देव्यास्तस्याश्च तं जपम्
समर्पयेत्ततो मन्त्री जलधारपुरः सरम् १६५
गुह्यादि गुह्यगोप्त्रीत्वं गृहाणास्मत्कृतं जपम्
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्त्वयि स्थितम् १६६
यत्किञ्चित्कर्म हे देवि सदा सुकृतिदुष्कृतम्
तन्मे दुर्गपदस्थस्य भुङ्क्ष्व क्षपय दुर्गमे १६७
दुर्गा धात्री दुर्गभोक्त्री दुर्गा सर्वमिदं जगत्
दुर्गा यजति भूतानि या दुर्गा सोहमेव तु १६८
एतन्मन्त्राः समाख्याताः तयोः जपसमर्पणम्

कुसुमैरथ मूलेन किंचिदभ्यर्च्य तां पुनः १६९
अर्घ्यं दत्त्वा स्मरेद्देवीं महदानन्दसंयुताम्
ततो बहिर्गतास्ताश्च तदावरणदेवताः १७०
जपेत्तस्यां च संलीनां भानौ भाननुनियोजयेत्
इति श्रीविजयागमे पूजाविधिर्द्वितीयः पटलः

## पञ्चगव्यविधिपटलम्

अथ वक्ष्ये विशेषेण पञ्चगव्यविधिक्रमम्
द्वितीयं पञ्चगव्यन्तु सहसन्तु पृथक्पृथक् १
कृष्णवर्णन्तु गोमूत्रं रक्तं गोमयमुच्यते
पीतवर्णं पयश्चैव श्वेतायां दधिरुच्यते २
कपिलायां घृतञ्चैव गोवर्णान्तु प्रकीर्तितम्
प्रस्थरं पादघृतञ्चैव द्विपादन्दधिरुच्यते ३
त्रिपादं क्षीरमित्युक्तं चतुष्पादन्तु गोमयम्
षट्पादञ्चैव गोमूत्रं पञ्चगव्यं प्रकीर्तितम् ४
स्थण्डिलं कारयेद्धीमान् अष्टद्रोणैश्च शालिभिः
तदर्धैस्थण्डिलैर्भूष्य तदर्धैश्च तिलैरपि ५
लाजपुष्पैश्च दर्भैश्च विकिरेत्तु विशेषतः
पुण्याहं वाचयेद्धीमान् यथाविधिपुरस्सरम् ६
षट्पात्राणि च सङ्ग्राह्य ताम्रजं मृण्मयन्तु वा
मध्ये पूर्वे च याम्ये च उत्तरे पश्चिमे शके ७
क्षीरदुघृतञ्चैव गोमूत्रं गोमयोदकम्
ईशानमेकं विन्यस्य पुरुषञ्च यथान्यसेत् ८
अघोरन्त्रिरुच्चार्य वामदेवन्तु विन्यसेत्
सकूर्च्चं सापिधानञ्च गन्धपुष्पादिरर्चयेत् ९
मुलमन्त्रेण संस्थाप्य पूर्वमते नियोजयेत्

याम्यमुत्तरदिग्भागे ईशाने व विशेषतः १०
क्रमेण मूलमन्त्रेण तन्मध्येनैव योजयेत्
सकूर्चं सापिधानञ्च वस्त्रयुग्मेन वेष्टयेत् ११
सर्वगन्धसमोपेतं काञ्चनेन समन्वितम्
ध्यायेत्सदाशिवं रूपं पूजयेत्तु विशेषतः १२
एवञ्च सहजं प्रोक्तं पृथगेवन्तदुच्यते
स्थण्डिलं कारयेद्धीमान् पूर्वोक्तविधिना सह १३
शिवकुम्भन्न्यसेन्मध्ये तस्य वामे तु वर्धनीम्
क्षीरञ्च पूर्ववत्स्थाप्य दधिं वै दक्षिणे तथा १४
उत्तरे तु घृतञ्चैव पश्चिमे गोमयं भवेत्
गोमूत्रं स्थापयेदग्निं निर्ऋतिञ्च कुशोदकम् १५
नाळिकेरन्तु वायव्यां ऐशान्ये सर्वगन्धकम्
सकूर्चं सापिधानञ्च स्वस्त्र++ रणयकम् १६
शिवकुम्भे शिवं ध्यात्वा वर्द्धन्यान्तु मनोन्मनीम्
वामादि शक्तयश्चाष्टौ पूर्वादिषु क्रमाद्बुधः १७
यावत्स्थापितकुम्भे तु तस्माचोत्तरणं कुरु
स्थण्डिलं कारयेद्धीमान् पूर्वोक्तविधिना सह १८
पञ्चपात्राणि विन्यस्य सर्वे च याम्यके
उत्तरे पश्चिमे चैव यथाक्रमेण योजयेत् १९
क्षीरन्दधिघृतं क्षौद्रं इक्षुसारं पृथक्पृथक्
पूर्ववद्योजयेद्धीमान् यथा विधिपुरस्सरम् २०
प्रत्येकं प्रस्थसङ्ख्यातपञ्चामृतमिहोच्यते
अम्बी चैव गणाम्बी च गङ्गागौरी मनोन्मनी २१
सकूर्चं सपिधानञ्च सवस्त्रान् काञ्चकै ऋतम्
पूजयेत्पञ्चशक्तीनां स्वस्वनाम्नैर्विशेषतः २२
पिष्टामलकहारिद्रं नाळिकेरसमन्वितम्

पूजयेत्तु विशेषेण नित्यनैमित्तिकैस्तथा २३
महापादकदोषघ्नं शन्ते सायुज्यमाप्नुयात् २४
इति विजयाख्ये महातन्त्रे पञ्चगव्यविधिपटलः

विजयागमे नैमित्तिकपूजाविधिपटलम्

सङ्क्रान्ते पुष्यमासे तु प्रातस्सन्तिरिहोच्यते
क्षौद्राभिषेकमित्युक्तं सूर्यप्रीतिरुच्यते १
माघमासे तु कर्तव्यं घृतकम्बळमेव च
घृतकम्बळमित्युक्तं विष्णुप्रीतिकरं भवेत् २
संबर्कादिपूजायां सर्वपूजा फलप्रदम्
दिनप्रीति विशेषेण पूजाहीनन्तथैव च ३
शिवरात्रि पूजयेत्तस्मात् सर्वपूजफलप्रदम्
फाल्गुने दधिसम्पूज्य धनपुत्रविवर्द्धनम् ४
दधिपूजन्तु मेवं हि इन्द्रप्रीतिरुच्यते
विषुवं प्रोक्तं मेवं हि मध्यान्नं पूजनन्तथा ५
चैत्रदमनकं प्रोक्तं ऋृषीणां प्रीतिरुच्यते
वैशाखे गन्धपूजायां विघ्नेशं प्रीतिरुच्यते ६
ज्येष्ठमासे तु कर्तव्यं फलपूजनमारभेत्
फलपूजनमित्युक्तं वत्सगोवर्धनं भवेत् ७
सायाह्ने पूजनं तस्मादयनेषु विधीयते
ऋाषाढे क्षुरसम्पूज्य रुद्रप्रीतिकरं भवेत् ८
प्रोष्टे उपूपसम्पूज्य स्कन्दप्रीतिकरं भवेत्
विषुसंप्रोक्तमेवं हि ऋर्धयामे तु पूजयेत् ९
ऋश्विने चान्नसम्पूज्य ब्राह्मणप्रीतिरुच्यते
शिवशक्तिसमुत्पन्नं लोकस्योत्पतिकारणम् १०
ऋोषधीनां विवर्तन्ते बीजदानमिहोच्यते

ऋात्मसृष्टिकरं प्रोक्तं साध्यं लवणतापयेत् ११
कन्यका वस्त्रदानं स्यात् स्वर्णदानन्तु कन्यका
स्वर्णलोके रक्षार्थं वस्त्रपुत्रविवर्द्धनम् १२
भारिदानं भवेत्तस्मात् सर्वप्राणिहितावहम्
कृत्तिकामासमेवोक्तं दीपपूजनमेव च १३
मार्गशीर्षमासे तु ऋार्द्रायान्तु प्रकल्पयेत्
घृतस्नानमिदं प्रोक्तं सर्वपापनिकृन्तनम् १४
डोळारोहणमेवोक्तं गौरीलीला विधिक्रमम्
शिवशक्तिसमोपेतं डोलारोहणमेव च १५
पुष्यमासादि पूजायां मार्गशीर्षान्तमेव च
स्नपनं पूजयेत्पूर्वं ऋग्निकार्योक्तमाचरेत् १६
ऋन्न्यदानादिकं पूर्वं स्थापयेत्परमेश्वरम्
पूर्वोपचारमेवन्तु कुर्याद्ग्रामप्रदक्षिणम् १७
उदाहरणम् । शैवभूषण संपिन्न्य हवपूजनं हि
मधुना तैषे नपः । कम्बळं फाल्गुन्य दधिपूजनम् ।
दमनकञ्चैवत्रेन्य । तश्चन्दनम् ।
ज्येष्ठमाससि भलत्रयं शुचिघनं क्षीररिसिताश्रावणे ।
भाद्रोपूपनिषेवरान्नयजनं । दीपार्चनम् ।
(कामिके) तामसन्तं गन्धं भलं क्षीरं सीतापूपान्नद्वीपकम् ।
ऋाज्यमधुसूतञ्चैव दधि चैत्रादिषु क्रमात्
इति विजयतन्त्रे नैमित्तिकमासपूजाविधिपटलः

## काम्यलिङ्गप्रतिष्ठै

काम्यलिङ्गप्रतिष्टान्तु वक्ष्ये लक्षणपूर्वकम्
काम्यत् निधिद्वयो ज्ञेयास्सिद्धयो बहुतास्तृत १
कन्न्यसं मन्धमं श्रेष्टा ज्येष्टञ्चेति चतुर्विधः

प्रत्येकं त्रिविधं प्रोक्तमुत्तमादि विभेदतः २
फलदृष्टमदृष्टञ्च द्विविधन्तत्परापरिः
कन्न्यसं भूपतियत्व मध्यमं विलिसिद्धयः ३
उत्तमं खेचरित्वञ्च श्रेष्टदेवसमन्विता
भित्यते बहुसैकैकं सद्ये शत्वादि भेदतः ४
विद्येशत्वञ्च रुद्रत्वं ब्रह्मत्वं वैष्णवं पदम्
इत्येवमादि देवत्वं श्रेष्टमित्युच्यते बुधैः ५
सिद्धयश्चाणिमाद्याश्च चक्रवर्तित्वमेव च
इत्येक वामादिक ज्येष्टं सिद्धीनां मुनिपुङ्गवाः ६
++++++++ पाताळ खड्गघराटादि मध्यमः
अपमृत्यु जयोश्चाट वश्यात्वमथमं मतः ७
दृष्टञ्चेत्तदने नैविधते देहेनोपभुज्यते
देहान्तरेणार्थष्टं मायाकार्ये परत्र च ८
मायाकार्यैमरेशादि रुद्रस्थाने तु यत्सुखम्
उपरन्तत्परं विद्यादनन्तादि पदस्थितम् ९
न सिद्धिर्न च मुक्तिश्च लिङ्गाग्रयणमन्तरा
शिवलिङ्गमनाश्रिक्षु सिद्धिमुत्यभिलाक्षिणः १०
येनमूम इधीयस्तीर्णाकं भीमं भवसागरम्
किं वाभीष्टणिप्राप्तिसिद्धिवसारलिङ्गे च जपामूलेडाः ११
कायुक्ति भ्रान्तञ्चेतसः ।
तस्मा लिङ्गा श्रयासिद्धिर्नालिङ्गं समाश्रयेत्
विष्णाद्यवसनो रुद्रा मुनयश्च महौजसः १२
विध्विलिङ्गमाराध्यफलमिष्टतमं गताः
स्वयम्भु स्थापितं वापि दुनिभिर्विविधैर्गनै १३
सिन्धैर्ध विद्याधराद्यैश्च मनुष्यैः कदाचन
स्वयं वा स्थापयित्वा तु सर्वलक्षणसम्युतः १४

यथा शास्त्रा यथाकालं यथादेशं परीक्ष्य च
तत्र संसाधयेत्सिद्धिमाचार्यस्साधकोपि वा १५
स्वयं कर्तुमशक्ताना द्रपतीनां हिताय च
देशिकस्साधयेत्सिद्धिञ्चतुर्णां वा हिताय च १६
स्वस्य पान्यस्य वाकन्तु भिक्षकन्तुभिः कन्तु
देशिलिङ्गार्थमाकारयात् स्वस्वकृत्यानुसारतः
शिलादिद्रव्यमादाय यत्कर्मानुरूपतः १७
तानि द्रव्याणि बहुधा शिलाम्य लोहदारुभिः
रत्नक्षणिकवस्त्राणि कथन्तेतानि लेशतः १८
श्वेतारक्ता च पीता च कृष्णाचेति चतुर्विधः
चतुर्णामपि वर्णानां शिलायात्रिय सम्मता
एताश्चतस्रो विप्रस्य तिस्रो राज्ञामुपेविशः १९
एका रुद्रस्य नियमान् शिला भूम्यश्च कीर्तिताः
तत्तत् भूर्जनिता ए च मृदो लिङ्गार्धमीरिताः २०
फललिङ्गान् रूपेण शिलानां समुदास्त्रदम्
पृथ्वीशत्वं फलं ज्ञेयञ्चतस्त्राणामृदामपि २१
श्रीकामस्य स्वर्णोक्थं कामराजस्य राजतम्
आयसं मारणे लिङ्गभात्मादेकं सजं भवेत् २२
वत्सादेरितिजं ज्ञेयं यन्त्रपूजं पुत्रवर्धये
विद्धिकामस्य तात्रोर्थं सीसजं व्याधि नाशनम् २३
लोहलिङ्गं समाख्यातं अन्नलिङ्गमथोच्यते
वज्रलिङ्गं क्षितीशत्वं मरकतं आरोग्यकं भवेत् २४
इन्द्रनीलमयात् लिङ्गात् सर्वान् कामान् समश्नुते
महानलमहालिङ्गा वैष्णवम् पदमाप्नुयात् २५
वैडूर्याद्व्याधिनाशं स्यात् सौभाग्यं पुष्यरागजम्
स्यान्मरतक्रमारोग्यं प्रवाळञ्च वशीकरम् २६

राजावर्तमर्पा ++ लिङ्गात्सभाभोगं समश्नुते
नैलनागेन्द्रभोगाय शां सौभाग्यदं भवेत् २७
शूलाक्षमणिज शत्रुक्षयाय प्रवाळकन्तथा
सस्यकं सस्यनिष्पत्यै सौरार्थं सूर्यकान्तकम् २८
चन्द्रकान्तममृजिते भूतिदं पद्मरागजम्
स्फटिकं सर्वसिध्यर्थं भोगजन्दिव्यसिद्धये २९
वैक्रन्तकं भावरन्ताध स्कान्दजं ++ हितम्
क्षुद्रसिद्धि क्षुतं मन्त्रजाति संस्कार संस्कृतम् ३०
गुणादिभ्य फलं प्रोक्तं परासुमणजातिषु
इत्थलक्षणमाख्यादा दारुजं कथ्यते धुना ३१
सारं पद्मक्षजं भूत्यैक्षं रुद्रमजायुषे
माधुर्यं गर्त्थगुणवत् ज्ञानं सौभाग्यकीर्तिजम् ३२
एकाहे चन्दनाशोकं शिंशपाशोत् बिल्वजम्
सर्वदं खातरामिष्टा विषाश्च जमरिञ्चिते ३३
यद्वासाधकनक्षत्र वशालिङ्गन्तु दारुजम्
कारस्तरश्चामलकतयोदुम्बरजम्बुकौ ३४
निन्दिरं कृष्णात् ककुभौ शिरसां श्वर्त्थकौ ततः
पुन्नागञ्चैव नित्यक्रोध ++++ ३५
अम्बकाष्टबिल्वर्जुनशलल्मी वकुळस्तथा
विणिसर्जस्तथा वृक्षो वञ्जुळः फनसस्तथा ३६
अम्रोकौ च कदम्बञ्च वह्निं बोधतै वचा
मधुकाचाश्वनी पुष्य नक्षत्राणान्तु पादपाः ३७
एभिरक्षा विरुद्धैस्तुं रूभिश्शान्तिकादिकम्
विधाय लिङ्गकर्तव्यं साद्यर्थैम्मरणादिकम् ३८
श्वेतान् मूलजं लिङ्गजयार्थं विजयार्थिनाम्
चन्दनं सर्ववश्ये स्यात् श्रीकरं रक्तचन्दनम् ३९

सरळं सर्वकामार्थं गोमेधं रोगनाशनम्
सप्तवजाटन समुद्भवम्
विशेषसर्ववर्णानां सर्वकामार्थसाधनम्
उदुम्बरमयं पुष्ट्यै शान्त्यै न्यग्रोधसम्भवम् ४०
वश्यादुश्चर्थजं लिङ्गमारोग्यं खादिरं भवेत्
विजयतन्त्रे इति काम्यलिङ्गप्रतिष्ठाविधिस्समाप्तः

सर्पार्चितयागविधिः

अथ सर्पार्चितो यागं कामायातो विधीयते
आग्नेय्यां कारयेत्कुण्डं वृत्तं वा चतुरश्रकम् १
हास्तिकं मेखलासूक्तं योन्या चोपरशोभितम्
हस्तमात्रायता कुण्डं द्वित्रिवेदाङ्गुलोदयाः २
मेखलास्तद्धनश्चान्तः कर्णमाद्बहिः स्थितिः
कुण्डिका तत्प्रमाणेन विस्तरं सदृशं मतम् ३
द्विहस्तादि मानान्तान्त्येष्टविभाजिते
तेषु भातोङ्गुळो ज्ञेयं तेन ते मेखलां नयेत् ४
वसुमात्रततिः कार्यद्वैक्यातो द्वादशाङ्गुळा
ग ++++ सदृशे योनिकार्यं वा कुणुसन्निभिः ५
कर्णपादप्रवृत्तार्धपरः पञ्चाश योगता
योनिकुण्डं भवेदेवद्योन्यहन्यद्य योगिकम् ६
वसुभागं द्रुमादर्वं श+++ क्रोधशशाङ्ककैः
त्रिभागप्रद्वितो वृत्रं मत्स्यैस्त्रिभिर्नैशा चरं भवेत् ७
दशांशवृद्धितोवृत्तं ग्रामादाखिलकामदम्
षड्भास वृद्धितो मत्स्यैष सश्रच्चांनैनिलैः ८
पद्माहमेखलं पद्मं ममर्दिनं चण्डन स्थितम्
गायत्रियाङ्गधीकदारकण्ठाद्द्युमानतः ९

ग्रा कराठां लोचने यष्टा पट्टनिर्वेदिकां क्षराम्
स्थरािडलां तदभावे तु यद्वा गोमयमराडलम् १०
सम्पाद्या लोक्यदूलेन हेतिना प्रोक्ष्य वर्मरा
ग्रन्धुक्ष्यास्त्रेरा सन्ताटयाघ्ननोद्धारपूरया ११
समि करणसेकौ च तन्ना कुट्टनपार्जरे
लेपदे कुराडनिर्माणा परिधानार्चने तथा १२
प्राङ्मुखाभिस्त्रिरेखाभिरुदग्रेशा विनिर्मिता
वज्रिकरणभृङ्गादौ कर्तव्यौ मननासिना १३
त्यस्त्रेरणा लेखयावद्वा वर्मरायभ्युक्षरणं तथा
ततो विष्टुतमध्यस्थमकृत्वा दीपेन विष्टरम्
तन्मध्ये पूजयेन्मन्त्री हृदा वागीश्वरा विभो १४
स्मृत्यादिरंसुतद्योगजलीतुर्यमिवानलम्
गर्भं न्यास्यां क्षिपेत्तस्याः परित्यज्यसुरांशकम् १५
समेत्य वह्नित्रितयं न्यस्त्वा तत्रानुलक्षराम्
मन्त्रसंहितया लभ्य धेनुमुद्रामृतीकृतम् १६
र पूजितं कृतं कृत्वा युग्मकुराडोपरि त्रिधा
ततो विशीर्णमनलं सद्रीष्यवं क्षिपेत् १७
गर्भाधानाय सद्येन संपूज्य जुहुयाद्धृताः
पुंस्त्वो वामेन पूज्य शिरसो जुहुयाद्धृता
इष्ट्वाघोषेरा शिखया हुनेत्सुमन्तकविमशी १८
तथै चन्नत्तरङ्गाणी दर्भैणाग्नेः प्रकल्पयेत्
नी कृत्युद्घाटने कृत्वा ततोऽग्नेः जननक्रिया १९
ततोऽग्निर्दीपयेद्विद्वान् टवरखेन शिवं स्मरन्
नेरेष्ट्वा तनुत्रेरा तिस्त्रो दद्यात् तिलाद्युतिः
ततः सूतकनाशाय कुराडदैर्घ्येरा सेचयेत् २०
ग्रास्तीर्य परितो दर्भा नाडिना लालभा नयेत्

सकृत्कृत्वा हुने पञ्च समिधः पञ्च एव च २१
विन्यसेद्विष्टरं तेषु ब्रह्मरुद्राच्युतेश्वरान्
मेखलासु च लोकेशान् रक्षार्थं कारियोजयेत् २२
रुशेनानां कर्मार्थमिष्ट्वास्त्रोणाहुर्ददेत्
नामकुर्यात्ततो वह्नेः शिवाग्निस्त्वमिति ब्रुवन् २३
ततः स्रुक्स्रुवयोः शुद्धिर्विधेया याग कर्मणि
स्रुक्स्रुवौ वै कंकनी कार्या यद्वा यज्ञतरूद्भवः
सा च स बाहुमानाय सर्वाङ्गुलकृतानना २४
एककर्णापि सद्वेति द्विमात्रा स चतुष्किका
द्विसप्तदण्डकूले तु चतुष्कलशोभिता २५
द्विमात्राखादषड्वृत्त घृतपुष्करशोभितान्
पृष्ठतोऽष्टदळोपेतकरा चाकारमण्डलान् २६
कनिष्ठिका प्रमाणानि भागत्याज्य निर्गमाः २७
स्रुवेगमलोप्यस्या स्वायं षट्त्रिंशदंशकम्
आनै वोऽपि दैर्घ्यैतो मात्रैस्तैरेव ++++ २८
त्रिरूयष्टसंमिथैः
अङ्गुष्ठमानकर्तास्य सकमश्मषाधारपुष्करम्
द्विपुटं पुरतोऽन्यत्र गजमस्तकसन्निभम्
मूलं च कर्षयाधारैः कर्तव्यो नाहतस्समौ २९
आकन्धरं कृशं कार्यो गोपालमिव कूलताः
कर्तव्यो स्रुक्स्रुवाप्यर्धं सदा विश्वफलार्थिभिः ३०
सर्वतन्त्रेषु सामान्यं विमानं चाहमश्वरः
स्रुक्क्रियारूपिपीशाक्तिः स्रुवस्साक्षान्महेश्वरम्
तासाभिद क्रियते होमस्ततस्तौ शुभलक्षणौ ३१
कृत्वैवं स्रुक्स्रुवावद्भिः प्रक्षाळ्य दहनोपरि
भ्रामयित्वाथमग्रेण मध्यं मध्येन बर्हिषा ३२

मूलं मूलेन च स्पृष्ट्वा सर्वे सर्वात्मनात्मनः
न्यस्तोपरिति खण्डञ्च शिवशक्तितयोर्यजेत्  ३३
ततो गव्यं युपात्रस्थं परिशुद्धं च वाससा
आनीयाग्नौ प्रताप्येद्धे नाभेत् संप्लवौ नयेत्  ३४
दर्भाग्रद्वितयं मध्यग्रन्थितं सत्पवित्रकम्
अनामाङ्गुष्ठयोगां सात्रया अनलसंमुखम्
तन्मन्त्रेण त्रिधा तद्वत् हृदयेनात्मसंमुखम्  ३५
तन्मन्त्रेण त्रिधा तद्वत् हृदयेनात्मसंमुखम्
प्रादेशमात्रदर्भाग्रामाज्यमध्ये ततो न्यसेत्  ३६
नीराज्योद्दीप्य बह्नीभिः वक्ष्यार्धाव ++ स्मरेत्
मध्यतोऽग्नि समध्या तु सोममध्यात्पदद्वयम्  ३७
अग्नि स्विष्टकृतं चैव हुनेत्पक्षे सिते गुरुः
सिते तरेऽन्यथा किन्तु सोमं हुत्वा रविं हरेत्  ३८
एवं कृते भवेद्वह्नि शिवाय शिव कर्मसु
नाशिवे शिवकर्माणि कर्तव्यानि कदाचन  ३९
ततोऽन्ततो शिवः कार्यः प्रयत्नेन हुताशनः
प्रवृत्तिरस्य पठित्वा संस्कारानितरानपि  ४०
गदाधानादि संस्कारः पञ्चभिस्त्वा शिवागमे
त्रिधाग्नेनन्यथा सिद्धा संस्कारा ++ ते पुनः  ४१
अभिचारादि कृत्येषु विज्ञेनानैव सिद्धये
अन्यथा सिद्धिसंस्कारे पर्णमन्त्रां शिवात्मने  ४२
हुनेद्यः सिद्धयेदूर्ध्वौ नाशयत्यविरेणुतम्
शैवानाग्नेवमन्त्राणां होमः प्रोक्तः शिवानले  ४३
अन्येषां प्रागतस्तत्र शिवाग्निर्यच्छवात्मधीः
मन्त्रायै वेदिकायां च क्रिया वेदादि चोदिताः  ४४
शिवेनले नियुक्तश्चेत् स होतुर्विनिपातकृत्

अस्मिन्नवसरे वाच्यं हव्यकव्यादि लोतले ४५
आवास्मित शिवे होम इति शास्त्रार्थनिर्णयः
अरणे संभवे योऽग्निः नास्य गर्भादिसंस्क्रियाः
गायत्रीवारणी यस्मात् सन्ति तस्यां प्रजायते ४६
अमन्त्रो योगभेद्वग्निग्रकान्तादि संभवः
कर्तव्यास्तस्य संस्काराः पञ्च गर्भानद्यः क्रमात् ४७
एवं शिवानले सिद्धे विन्यसेत्प्राश्यनानलम्
तस्मिन् मूर्तिद्वयं नीत्वा व्यक्ताव्यक्तस्वरूपकम्
तत्र सूयशिवं प्राग्वदन्यद्वाररणान्वितम् ४८
समित्सर्पि हि लैव्रीहि यमस्मोदि नादिभिः
समस्तैरथवार्धस्तैर्होमः कार्योनिजेच्छया ४९
आज्य भावात्तिलैर्होमः कर्तव्यः कृष्णवर्चसा
शिवाद्दशांशके होमः स्वङ्गानां ब्रह्मणामपि ५०
एवं हत्वा स्वमन्त्रोर्व्यश्च ताम्बूलपश्चिमम्
मन्दयित्वा ततो भस्म शिवं प्राग्वद्विसर्जयेत् ५१
वह्निं सं रक्षयेन्नित्यं चतुर्व्याहृतिहोमतः
यद्वा विसर्जयेद्वह्निं पुनः संस्कृत्य योजयेत् ५२
प्रत्यहं कुण्डसंस्कारो भस्मापनयपूर्वतः
ततो मण्डलकं कृत्वा गन्धपुष्पादिभिः क्रमात्
रुद्रादीन् परितोऽभ्यचर्य बलितस्तोषयेत्तथा ५३
प्राच्यां रुद्राः स्थिता याम्ये मातरः पश्चिमे गणः
यक्षः सौम्ये ग्रहास्सर्वे सप्तार्चिष्यसुरस्थितः ५४
पालाश्यानि वृत्तौ वायौ नागवक्षराशयः
तथा ++++ व गुणावाता क्षेत्रपो वायु दक्षिणे ५५
यथा स्थानस्थितो तेजः सन्तर्प्य बलिभिः शुचिः
उपसंहृत्यतान्यायात् साध्यर्पात्रः शिवान्तिकम् ५६

समर्पिता क्रिया पुनरष्टा सकृच्छिवम्
विसर्जयेत्ततत्रैकं तत्प्रकारः पुरोदितः ५७
विसर्जयित्वा देवमग्निमध्ये स्थितं पुरा
चरमं लिङ्गमध्यस्था वयवं नैमित्तिके ++ च ५८
रात्रौ पूजा गिरं हुत्वा शिवार्चा परिकल्पते
निशा विभवनं पूजा गिरं हुत्वा शिवार्चापरिकल्प्यते
निशा विभवनं पूजामित्याह विगच्छवः ५९
अग्निकार्यै समाप्तेऽस्मिन् कार्यो नित्योत्सवो विधिः

## शिवरात्रिविधि

अतं परं प्रवक्ष्यामि शिवरात्रि विधिक्रमम्
कृतत्रेतायुगे चैव द्वापरे कलियुगे तथा १
युगे युगन्तु सम्पूज्य त्रेतायान्तु शुभं यजेत्
त्रेतायां विघ्नकृत्पूज्य द्वापरे चा ++ तं यनेत् २
ब्रह्मेन्द्र ऋषिभिश्चैव कलिं सम्पूज्यतो हरा
साघे कृष्ण चतुर्दश्यां भाष्गु देशद्वितीयके
चैत्रमासे त्रयोदश्यां वैशाखे कृष्णपञ्चमी ३
ज्येष्ठेषु च तृतीये च आषाढे चाष्टमीषु यत्
द्वादश्यां श्रवणे चेवा पूर्वाषाढे तु पञ्चमे ४
रगये सप्तमी चैव कृष्णाष्टम्यान्तु कृत्तिके
द्वादश्यां आर्द्रमासे तु पुष्यमासे तु चाष्टमी ५
येवं संवत्सरापूजा शिवरात्रा उपासतम्
माघमासे चतुर्दश्यां तत्पलं शिवरात्रिका ६
एकमासे द्विपक्षे तु रात्राविख्यास्ततः परम्
शिवं सम्पूज्य तद्रात्रे माघमासे तु वा यजेत् ७
प्रमाढो +++ पक्षे तु +++++++

शिवरात्रौ तु कर्तव्यमन्यरात्रौ न कारयेत् ८
तस्मात्सर्वप्रयत्नेन पूजां कुर्याद्विशेषतः
रात्रौ कृष्णपक्षे तु शिवपूजाविधीयते ९
तत् रात्रं शिवरात्रिं स्यात् देवसान्निध्यमेव च
सर्वरी पक्षहीनेस्तु सन्दोषं बहुळास्थया १०
तस्मात्सर्वप्रयत्नेन सर्वमासक्रमेण तु
नित्यसन्ध्यावसाने तु शिवरात्रिं समाचरेत् ११
यामं प्रति विशेषेण शिवपूजा विशेषतः
नवाहे चैव सप्ताहे पञ्चाहे चाङ्कुरार्पणम् १२
अङ्कुराण्यर्पयेत्पश्चात् पूर्वोक्तविधिना सह
तद्दिनस्य तु पूर्वे तु मण्डपं पूजयेत्ततः १३
वस्त्रेण वेष्टयेद्धीमान् बिल्वपत्राधिवासकम्
प्रभाते विमले धीमान् देशिको स्नानमाचरेत् १४
पूर्वाह्ले तर्पणं चैवा मध्याह्ने तु प्रदक्षिणम्
सायाह्ने पूजनं कृत्वा येवं प्रति समाचरेत् १५
विप्रक्षत्रियविट्छूद्र ++++ समन्वितम्
द्विजानां शिवभक्तानां सर्वेषां प्राणिनामपि १६
सर्वेषां सर्वनारीणामुपवांसन्तथैव चा
निद्राहीने प्रयत्नेन सर्वकार्याणि साघयेत् १७
+++ सर्वसिद्धिस्या दिष्टकाम्यन्तथैव च
आयुस्सु धन पुत्रं च सर्वमोक्षन्तथैव चा १८
इष्टकाम्यं च यत्कुर्यात् शिवरात्र्युपवांसतः
निद्रायान्तु फलं हीनं निद्राहीनन्तु सत्++म् १९
तस्मात्सर्वप्रयत्नेन उपवासो अनिद्रकम्
ऋग्यजुस्सामधर्माणि चतुर्भू प्रतियामकम् २०
ब्राह्मणैर्मुनिभिस्सायो देशिकं शिवपूजयेत्

विघ्नेशं पूजयेत्पूर्वं सौरपूजमतः परम् २१
शालिभिस्तरिडलं कृत्वा पुरयाहं वाचयेत्ततः
पूर्वे तु पञ्चगव्याद्द्वितीयं पञ्चामृतं भवेत् २२
तृतीये स्नपनं कल्प्य इक्षुसारं चतुर्थकम्
यामं प्रति विशेषेरा पूजयेद्देशिकोत्तमम् २३
पूर्वे स्नपनं प्रोक्तमष्टोत्तरस्नपनं भवेत्
द्वितीये स्नपनं प्रोक्तं षोडशं स्नपनं भवेत् २४
तृतीये स्नपनं प्रोक्तमष्टमं स्नपनं भवेत्
यामं प्रति विशेषेरा स्नपनं कारयेद्बुधा २५
पूर्वे याम्ये तु संस्नाप्य बिल्वपत्रेरा समर्चयेत्
द्वितीये हेम पुष्पैश्च तृतीये जातिपुष्पकम् २६
नन्द्यावर्तं च सम्पूज्या चतुर्यामे प्रपूजयेत्
चतुस्सन्ध्यार्चनं कुर्यात् बिल्वपत्रै समन्वितम् २७
मुद्गान्नं प्रथमं चैव द्वितीयं पयसान्नकम्
तृतीये क्रसरान्नं स्यात् शुद्धान्नं हि चतुर्थकम् २८
यामं प्रति विशेषेरा क्षेत्रपालं समर्चयेत्
यामं प्रति विशेषेरा वग्रहोमं समाचरेत् २९
देशिकं पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः
ब्राह्मणां पूजयेत्तत्र वस्त्रहेमाङ्गुळीयकैः ३०
श्रीकरं विजयं पुरयं श्रायुरारोग्यमर्चनम्
एवं संवत्सरं पूज्यं शिवलोके महीयते ३१
इति विजयाख्ये महातन्त्रे शिवरात्रिपूजाविधिपटलः

Reference:
*Vijayāgama* manuscripts T0625, T0124, T0063, T0065, T0320, T0829, T0662 and T0223 from the Muktabodha on-line digital library, based on the paper transcripts of the French Institute of Indology at Pondicherry, India: http://muktabodha.org/ or http://muktalib5.org/digital_library.